SHRI RAJASTHAN SANSKRIT COLLEGE SERIES 23rd KUSUM

*The*

# TARKA SANGRAHA

OF

## M. M. ANNAMBHATTA

WITH

THE COMMENTARIES NYAYABODHINI, PADAKRITYA, BALMANORAMA, PARIKSHA.

BY

Pt. GURUPRASAD SHASTRI,

VYÂKARNÂCHARYA, NYÂYÂCHÂRYA, DARSHANÂCHÂRYA,

[ *Principal Rajasthan Sanskrit College, Mirghat, Banaras* ]

Bhashateeka-by

ACHARYA SITARAM SHASTRI,

[*Principal–Seth Radhakrishna-Poddar Vidyalaya, Ramgarh, Jaipur.*]



PUBLISHED BY

BHARGAVA PUSTAKALAYA

GAIGHAT, BANARAS 1.

4th, edition, 3000 ] 1950 [ *Price Rs. 1/4*

# प्रस्तावना

अथाऽयं संमुद्रं न्यायबोधिनी-पदकृत्य-बालमनोरमा-परीक्षा-टीकाभिः किञ्च भाषा-टीकया च सह प्रकाश्यते तर्कसंग्रहो बालानां सरलया सरण्या न्यायशास्त्रे प्रविविक्षूणां हिताय महामहोपाध्यायैरन्नम्भट्टैर्विरचितो जगति लोकैर्नितरामादृतश्च ।

अयं हि तर्कसंग्रहः प्रसन्नगम्भीरया गिरा न्यायवैशेषिकयोर्मतयोः सर्वस्वं संक्षिप्यैव प्रकटीकुर्वन् कैर्नाम न खलु परिचीयते ? ।

स चाऽयं काशिकराजकीयसंस्कृतपरीक्षासु, कलिकाता-विहार-पञ्चनद-( पञ्जाब )-प्रभृतिप्रदेशप्रसिद्धासु नानापरीक्षासु च परीक्ष्य-ग्रन्थतयानिर्धारितो जागर्त्ति ।

तस्य चाऽस्य तर्कसंग्रहस्य सरलया गिरोपनिबद्धस्यापि विषयगौरवेण बालैरेकपदे एव दुरवगाहस्य यथावदवबोधे बालानां नितरां साहाय्यकं दिशन्तीं श्रीगोवर्धनाचार्यैरुपनिबद्धां न्यायबोधिनीं, तथैव सरलया मनोहारिण्या सरण्या पदार्थतत्त्वं प्रकटयन्तीं पदकृत्याऽभिधां टीकाञ्च विना नतरामस्य संस्करणस्य सर्वाङ्गीणा परिपूर्णता भवतीति विमृश्य न्यायबोधिनी-पदकृत्ये अपि चाऽत्रास्माभिर्विनिवेशिते ।

न्यायबोधिन्यादिषु विषमस्थलतया प्रगीतेषु स्थलेषु च गूढमभिप्रायं सरलतमया भाषया प्रकाशयन्ती नवीना बालमनोरमा नाम टीका खल्वपि केषां मनसो न प्रमोदाय प्रभवेत् ? ।

अद्यत्वे 'परीक्षासु च कथङ्कारं गूढोऽयं तर्कविषमो विषयः, कियान् वा विलेख्यो येन प्रश्नानां यथावत्समाधानं भवे'दिति न सर्वे छात्रा ज्ञातुं प्रभवन्ति, तेन च परीक्षासु नानाविधा क्लेशपरिपाटी बालैरनुभूयते स्म । तस्या अपसारणाय, बालानां मनसः प्रमोदाय चास्माभिरभ्यूहितां परीक्षां नाम टीकां बालाश्छात्रा नूनमभिनन्दिष्यन्तीति प्रबलोऽस्माकं प्रत्ययभरः ।

मन्महे च परीक्षाख्यायां टीकायां समुपनिबद्धो विषयः परीक्ष्यैरन्तेवासिभिर्यदि मनोयोगपूर्वकं विभाव्य लेखनादिना सम्यक् परिचीयेत तर्हि 'परीक्षायां कथं, कियद्वा लेख्य'मित्यादिशङ्कानां स्वयमेव समाधानं भवेत्। लेखनैपुण्यमेव हि परीक्षानिम्नगोत्तरणे रहस्योपदेश इति हि सर्वेषामेव विदुषां निश्चितं मन्तव्यमिति च प्रसिद्धमेव।

अध्यापकैश्च प्रश्नपत्राऽनुसारेण, परीक्षाटीकाऽनुसारेण च, स्वप्रतिभानुसारेण च प्रश्नानुद्भाव्य तदुत्तरदाने, तल्लेखने च च्छात्रा नियोज्याः। एवंरीत्याऽभ्यासे कारिते, कृते चाऽवश्यं परीक्षातरङ्गिणी नितरामाञ्जस्येन समुत्तीर्णा स्यादिति च—

श्रीराजस्थानसंस्कृत-कालेज,
मीरघाट, काशी।
मार्गशीर्ष २-१९९५
१-८-३८
२०-९-५०

विधेयाग्रतस्सराणां—
श्रीगुरुप्रसादशास्त्रिणाम्।

|| श्रीः ||

# तर्कसंग्रह-विषयानुक्रमणिका

इति तर्कसंग्रहविषयसूची ।



अथ बालमनोरमाविराजितः—

# तर्कसंग्रहः

न्यायबोधिनी–पदकृत्य–परीक्षा–समलङ्कृतश्च ।

निधाय[1] हृदि विश्वेशं, विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥ १ ॥

* अथ न्यायबोधिनी *

[2]अखिलाऽऽगमसञ्चारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा, गोवर्द्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

* अथ श्रीगुरुप्रसादशास्त्रिविरचिता बालमनोरमा *

मोदकाऽऽमोदकान्तेहं कोलिताऽलिकुलं नुमः ।
त्वङ्गत्तुङ्गतरङ्गाऽऽलितरलन्तुन्दिलं महः ॥ १ ॥
नुमोऽनवद्यसद्ग्रन्थविद्योल्लासितदिङ्मुखान् ।
मरुमण्डलमार्त्तण्डस्नेहिरामाभिधान् गुरून् ॥ २ ॥

१. [ मया–अन्नम्भट्टेन– ] हृदि विश्वेशं निधाय, गुरुवन्दनं [ च ] विधाय, बालानां सुखबोधाय तर्कसंग्रहः क्रियते–इति दण्डान्वयः ।

[मया–अन्नम्भट्टेन–] तर्कसंग्रहः क्रियते । किं कृत्वा ? । हृदि विश्वेशं निधाय । पुनः किं कृत्वा ? । गुरुवन्दनं विधाय । कस्मै प्रयोजनाय ? । बालानां सुखबोधाय इति च खण्डान्वयः ।

२. अखिलेषु आगमेषु = वेदेषु सञ्चरितुं शीलम्–अखिलागमसञ्चारि = 'एकमेवाद्वितीयं ब्रह्म' 'स ऐक्षत एकोऽह'मित्यादिसकलश्रुतिप्रतिपाद्यम् । निखिलश्रुतिरहस्यभूतमिति यावत् । 'श्रीकृष्ण' इत्याख्या यस्य तत्–श्रीकृष्णाख्यम् । परं = सर्वोत्कृष्टं । महः = तेजः, ध्यात्वा–गोवर्धनसुधीः=गोवर्धनपण्डितः–न्यायबोधिनीं-न्यायान्-तर्कान् बोधयति तच्छीला न्यायबोधिनी । मत्वर्थीयो वा इनिः । तां–तनुते = विरचयतीत्यर्थः ।

## * न्यायबोधिनी *

चिकीर्षितस्य[1] ग्रन्थस्य [2]निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति-निधायेति ॥१॥

## * बालमनोरमा *

१. चिकीर्षितस्य='तर्कसंग्रहो मत्कृत्या सिध्यतु' इति-या कृतिसाध्यत्वप्रकारिकेच्छा, तद्विषयीभूतस्य। ग्रन्थस्य=वाक्यसमूहात्मकस्य तर्कसंग्रहाख्यग्रन्थस्य।

√२. निर्विघ्नेति। निर्गता विघ्ना यस्याः सा-निर्विघ्ना, सा चासौ परिसमाप्तिश्च-निर्विघ्नपरिसमाप्तिः, तस्यै-निर्विघ्नपरिसमाप्त्यर्थम्। विघ्नध्वंसपूर्वकसमाप्त्यर्थमिति यावत्। एतेन मङ्गलं करणं, विघ्नध्वंसो व्यापारः, समाप्तिः फलमिति सूचितम्। तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः। व्यापारवत्कारणञ्च करणम्। मङ्गलजन्यत्वान्मङ्गलजन्यसमाप्तिजनकत्वाच्च विघ्नध्वंसस्य व्यापारत्वं सुवचमित्याहुः। इष्टदेवता=विश्वेश्वरो, गुरुश्च। निबध्नाति=ग्रन्थघटकीकरोति।

ननु तर्कसंग्रहाख्ये ग्रन्थे चिकीर्षिते 'निधाये'ति श्लोकः किमर्थमादौ निबद्ध इति चेन्नैवं, 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्ति, अध्येतारश्च वृद्धियुक्ता यथा स्युः'इति महाभाष्यादिप्रामाण्येन मङ्गलार्थं तदुपन्यासात्।

तार्किकास्तु-मङ्गलस्य समाप्तिसाधनतया समाप्त्यर्थमेव तदुपादानम्। ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति, कृतेऽपि बहुले मङ्गले कादम्बरी-रसगङ्गाधरादौ निर्विघ्नपरिसमाप्त्यदर्शनेन 'यत्सत्त्वे यत्सत्त्व' मित्येवंरूपाऽन्वयसहचाराऽभावाद्, बौद्धग्रन्थविशेषादौ, किरणावल्यादौ च मङ्गलाभावेऽपि समाप्तिदर्शनेन 'यदभावे यदभाव' इत्येवंरूपव्यतिरेकसहचाराऽभावाच्च-अन्वयव्यतिरेकव्यभिचारस्य समाप्तिसाधनत्वप्रतिबन्धकस्य सत्त्वादिति चेन्न, कादम्बर्यादौ विघ्नबाहुल्यादेव समाप्त्यभावः, बौद्धग्रन्थादौ तु जन्मान्तरीयमङ्गलेनैव समाप्तिः, किरणावल्यादौ तु ग्रन्थाद्बहिरेव कृतेन महागणपतिस्तोत्रपाठादिरूपमङ्गलेनैव समाप्तिरित्येवं कथनेनाऽन्वयव्यतिरेकसहचारस्योपपादयितुं शक्यतया निरुक्तान्वयव्यतिरेकव्यभिचाराऽभावात्।

ननु मङ्गलस्य कर्त्तव्यत्वे किं प्रमाणमिति चेन्न, 'समाप्तिकामो मङ्गलमाचरे'दिति श्रुतेरेव प्रमाणत्वात्। नचैवमानुपूर्वीका श्रुतिर्न वेदेषूपलभ्यते इति वाच्यं, शिष्टाचारेण तत्सत्त्वानुमानात्। अनुमानप्रयोगस्त्वित्थं-'मङ्गलं वेदबोधितकर्त्तव्यताकम्, अलौकिका-ऽविगीत-शिष्टाचार-विषयत्वात्, दर्शपौर्णमासादिवत्' इति। अविगीतशिष्टाचारविषयत्वमात्रेण वेदबोधितकर्त्तव्यताकत्वानुमाने तेषां निमिषितोन्मिषित-हसन-भोजन-शयना-ऽऽसनादेरपि तत्त्वापत्तिरतो 'ऽलौकिके'ति हेतुदले विशेषणम्।

रात्रिश्राद्धादौ व्यभिचारवारणाय-'अविगीते'ति तत्रैव विशेषणम्। अविगीतः-

## * अथ पदकृत्यम् *

श्रीगणेशं[1] नमस्कृत्य, पार्वतीशङ्करं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥ १ ॥
—यस्मादिदमहं मन्ये बालानामुपकारकम् ।
तस्मात्, 'हितकरं वाक्यं वक्तव्यं विदुषा सदा' ॥ २ ॥

विश्वेशं=जगत्कर्तारं श्रीसाम्यमूर्तिं, हृदि=मनसि[2], निधाय=नितरां धारयित्वा, गुरुवन्दनञ्च विधाय-कृत्वेत्यर्थः । बालेति । अत्राऽधीतव्याकरणकाव्यकोशोऽनधीतन्यायशास्त्रो बालः । व्यासादावतिव्याप्तिवारणाय-'अनधीतन्याये'ति । स्तनन्धयेऽतिप्रसक्तिवारणाय-'अधीतव्याकरणे'ति ।

सुखेति । सुखेन=अनायासेन । बोधाय=पदार्थतत्त्वज्ञानायेत्यर्थः ।

तर्क्यन्ते=प्रमितिविषयीक्रियन्ते इति तर्काः-द्रव्यादिसप्तपदार्थाः, तेषां संग्रहः=संक्षेपेणोद्देश-लक्षण-परीक्षाः-यस्मिन् स ग्रन्थः[3] ।

---

## * बालमनोरमा *

=अनिन्दितोऽनिषिद्धोऽनिष्टानुत्पादको वा, यः शिष्टानां=फलसाधनांशे भ्रान्तिरहितानाम्, आचारः=व्यवहारः, अनुष्ठानमित्येवञ्च हेतुदलार्थो बोध्यः । जलताडनादौ तथात्वापत्तिवारणाय च 'शिष्ट'पदम् । परे तु जलताडनादेरपि 'न कुर्यान्निष्फलं कर्मे'त्यादिस्मृत्या निषिद्धत्वेन विगीततया 'अविगीते'ति पदेनैव तद्वारणसम्भवाच्छिष्टपदं स्पष्टार्थमेवेत्याहुः ।

१—श्रिया=सिद्ध्या सहितो गणेशः-श्रीगणेशः, तं=सिद्धिविनायकं, लक्ष्मीविनायकं वा । किञ्च-पार्वत्या सहितः शङ्करः=पार्वतीशङ्करः, तं पार्वतीशङ्करम्=अर्द्धनारीश्वरं । गौरीशङ्करमिति यावत् । 'नमस्कृत्ये'ति शेषः । चन्द्रजसिंहेन=बुधसिंहनामकेन । 'चन्दनसिंहेने'ति केचित्पठन्ति ।

ननु पदकृत्यकं कस्मात्त्वया क्रियते इत्याशङ्क्याह—यस्मादिति । इदं=पदकृत्यकम् । 'तस्मा'दित्यस्य—'मया चन्द्रजसिंहेन क्रियते पदकृत्यक'मिति पूर्वेण सम्बन्धः कार्यः । कर्त्तुं योग्यं कृत्यम्, 'विभाषा कृवृषो'रिति अर्हे क्यप् । पदानां कृत्यं-पदकृत्यम्, पदकृत्यमधिकृत्य कृतं व्याख्यानमप्युपचारात्पदकृत्यम् । पदकृत्यमेव च पदकृत्यकम् । यद्वा—पदानां कृत्यं यत्रेति व्यधिकरणबहुव्रीहिः ।

पदकृत्यरचनावश्यकतां दर्शयति-हितकरमिति । अत्र काव्ये एवं विशकलितप्रयोगस्तु पदकृत्यकर्त्तुः काव्यरचनापाटवविरहादेवेति तत्त्वविदो गौडाः ।

२—मनसि = अन्तःकरणे । धारणञ्च प्रकृते चिन्तनमेव, अन्यथा व्यापकस्य तस्यैकदेशावच्छेदेन धारणाऽसम्भवादिदमसङ्गतं स्यात् ।

३—ग्रन्थः-तर्कसंग्रहाख्यः । नाममात्रेण='द्रव्यं' 'गुणः' 'कर्मे'त्यादिनाममात्रेण ।

द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया-ऽभावाः सप्त पदार्थाः ।

* न्यायबोधिनी *

अथ पदार्थान्विभजते[1]—द्रव्येति । तत्र 'सप्त'ग्रहणं—'पदार्थत्वं द्रव्यादि·

* पदकृत्यम् *

नाममात्रेण वस्तुसङ्कीर्त्तनम्—उद्देशः । यथा 'द्रव्यं' 'गुणा' इति । असाधारणधर्मो—लक्षणं, यथा गन्धवत्त्वं पृथिव्याः । 'लक्षितस्य लक्षणं सम्भवति न वा ?' इति विचारः—परीक्षा । [2]अत्रोद्देशस्य पक्षज्ञानं फलं, लक्षणस्येतरभेदज्ञानं, परीक्षाया लक्षणे दोषपरिहार[3] इति मन्तव्यम् ॥

* बालमनोरमा *

वस्तुनः=द्रव्यादेः, सङ्कीर्त्तनं=कथनम् । असाधारणधर्मः=अन्यूनानतिरिक्तवृत्तिर्गन्धवत्त्वादिः समनियतो धर्मः ।

१—विभजते इति । विपूर्वकभजधातोः—स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्य-मिथोविरुद्ध—यावद्धर्मप्रकारकबोधानुकूलो व्यापारोऽर्थः । आख्यातार्थश्च कृतिः । प्रकृते—स्वं=विभजतिः, तत्समभिव्याहृतं-पदार्थपदं, तदर्थतावच्छेदको धर्मः—पदार्थत्वं, तद्व्याप्याः, परस्परविरुद्धाश्च यावन्तो धर्माः—द्रव्यत्व—गुणत्व—कर्मत्वादयः, तत्प्रकारको बोधः—द्रव्यं गुणः कर्मेत्यादिः, तादृशबोधाऽनुकूलो व्यापारः—'द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्त पदार्था' इत्युक्तिरूपः, तदनुकूलकृतिमांश्च मूलकार इति समन्वयः ।

२—अत्र=तर्कसंग्रहे । इतरभेदज्ञानं=पृथिवीतरजलादिप्रतियोगिकभेदज्ञानम् । 'फल'मिति शेषः । तथा च प्रयोगः—'पृथिवी इतरभिन्ना, गन्धवत्त्वात्'—इति ।

३—'परिहारः' इत्यस्य 'फल'मिति शेषः । मन्तव्यं=निश्चेतव्यम् । एवञ्च यथार्थपदार्थतत्त्वज्ञानमनायासेन बालानामस्मादेवेति पठितव्योऽयं तर्कसंग्रह इत्यावेदितम् ।

'तर्कसंग्रहः' इत्यत्र निरुक्तव्युत्पत्त्या—'तर्क'पदस्य द्रव्यादिसप्तपदार्थपरतया द्रव्यादिसप्त पदार्था विषयः, प्रतिपाद्य-प्रतिपादकभावश्च सम्बन्ध इत्यावेदितम् । 'बालाना'मित्यनेन-ऽनायासेन तज्जिज्ञासुर्बालोऽधिकारीत्यपि सूचितम् । 'सुखबोधा-

* परीक्षा *

अस्यां टीकायां परीक्षार्थिनां बालानामुपकाराय प्रसिद्धाः प्रश्नास्तदुत्तराणि च कानिचिल्लिख्यन्ते । अस्याः कण्ठे धारणात्सफलयन्तु हन्त ! स्वश्रममनायासेनैव परीक्षार्थिनो बालाः ।

प्रश्नः—पदार्थसामान्यस्य किं लक्षणम् ?, कति च पदार्थाः ? ।

उत्तरम्—अभिधेयत्वं पदार्थसामान्यलक्षणम् । अभिधेयत्वञ्च—पदजन्यप्रतीतिविषयत्वम् । द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया-ऽभावाख्याश्च सप्त पदार्थाः ।

तत्र द्रव्याणि—

पृथिव्य-प्तेजो-वाय्वा-काश-काल-दिगा-त्म-मनांसि नवैव ।

* न्यायबोधिनी *

मणिसमवधानाऽसमवधानाभ्यामनन्तशक्ति-तद्ध्वंस-तत्प्रागभाव-कल्पनाया अन्याय्यत्वात् । तस्मात्सप्तैवेति सिद्धम् ।

द्रव्याणि विभजते—पृथिवीति । नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति ? । तथा हि—'नीलं तमश्चलती'ति प्रतीतेर्नीलरूपाश्रयत्वेन, क्रियाऽऽश्रयत्वेन च तस्य [1]द्रव्यत्वं सिद्धम् । न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम्; आकाशादिपञ्चकस्य, वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः, तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः, जल-तेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः, तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेन्न; तेजोऽभावस्वरूपत्वेनैवोपपत्तावतिरिक्ततत्कल्पनायां मानाऽभावात् ।

* पदकृत्यम् *

तत्रेति । तत्र—सप्तपदार्थमध्ये इत्यर्थः । 'द्रव्याणि—नवैवे'त्यन्वयः । एवं 'तत्रे' ति पदं 'चतुर्विंशतिर्गुणाः' इत्यादिनाऽप्यन्वेति ।

---

* बालमनोरमा *

ननु सत्यपि चन्द्रकान्तमणौ सूर्यकान्तमणिसमवधाने सति दाहोत्पत्तेर्दर्शनात् कथं चन्द्रकान्तमणेर्दाहप्रतिबन्धकत्वमिति चेन्न; सूर्यकान्तमणेरुत्तेजकतया, उत्तेजकाऽभावविशिष्टचन्द्रकान्तमणेरेव प्रतिबन्धकत्वेन, उत्तेजकविशिष्टेन्दुकान्तमणिसत्त्वे दाहोत्पत्तौ बाधकाऽभावात्, सूर्यकान्तमण्यभावविशिष्टेन्दुकान्तमण्यभावस्य दाहं प्रति कारणत्वस्य तत्र [सूर्यकान्तमणिविशिष्टचन्द्रकान्तमणिसमवधानदशायामपि] सुस्थत्वादिति स्पष्टमन्यत्र ।

मण्यादिसमवधानेऽनन्तशक्तिध्वंसकल्पना, असमवधाने—अनन्तशक्तिकल्पना, अतिरिक्तशक्तिकल्पने च तत्प्रागभावकल्पना चेति यथायथं योजनीयम् ।

१—तस्य=तमसः द्रव्यत्वमिति । गुणक्रियाश्रयस्यैव द्रव्यत्वादित्याशयः । क्लृप्तेति । सर्ववादिसम्मतनवद्रव्येत्यर्थः । अन्तर्भाव इति । तमसो नीलरूपवत्त्वेन तेषाञ्च रूपशून्यत्वेन तद्वैधर्म्यस्य स्पष्टत्वात् ।

---

* परीक्षा *

प्रश्नः-कति द्रव्याणि ?, कानि च तानि ?, किञ्च द्रव्यलक्षणम् ? ।

उत्तरम्—नव द्रव्याणि । तानि च—पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोरूपाणि । गुणसमानाधिकरणसत्तासाक्षाद्व्याप्यजातिमत्त्वं च द्रव्यलक्षणम् ।

## * न्यायबोधिनी *

न च [1]विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमस्त्विति वाच्यं, तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात्। तस्मात्–उष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि नीलत्वादिप्रतीतिस्तु भ्रान्तिरेव, दीपाऽपसरणक्रियाया एव तत्र भानात्।

## * पदकृत्यम् *

[2]द्रव्यत्वजातिमत्त्वं, गुणवत्त्वं, समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम्।

---

## * बालमनोरमा *

१ विनिगमनेति। एकतरपक्षपातिनी युक्तिर्विनिगमना। तमस्तेजोऽभावरूपं, तेजो वा तमोऽभावरूपमित्यत्र निर्णायकयुक्तेरभावाद्विनिगमनाऽभाव इत्याशयः।

ननु सामान्यधर्मज्ञानस्य विशेषजिज्ञासां प्रति हेतुतया पदार्थसामान्यलक्षण-कथनानन्तरमेव पदार्थविभागो युक्त इति मूले तदनुक्त्या न्यूनतेति चेन्न; पदस्याऽर्थः पदार्थ इति व्युत्पत्त्यैव 'अभिधेयत्वं पदार्थसामान्यलक्षण' मित्यस्य लाभात्।

२ द्रव्यत्वेति। कार्यसमवायिकारणतावच्छेदकतया, संयोगस्य, विभागस्य वा समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिः। 'यत्र च समवायेन कार्यं तत्र तादात्म्येन कारणन्तिष्ठती'ति हि नियमः। तथा च—

'समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसम्ब-न्धावच्छिन्ना कारणता, सा किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिष्ठकार्यता-निरूपितदण्डनिष्ठकारणतावत्'—इत्यनुमानेन कार्यसमवायिकारणतावच्छेदकधर्म-सिद्धिः। स च धर्मो द्रव्यत्वमेव, अन्यूनाऽनतिरिक्तवृत्तित्वात्।

ननु कार्ये घटादिध्वंसेऽपि कार्यत्वस्य सत्त्वात्तत्र च समवायेन कार्यत्वस्या-ऽभावात्कार्यतायाः समनियतत्वाऽभावेनावच्छेदकत्वासम्भवान्निरुक्तानुमानप्रयोगा-ऽसम्भव इति चेन्मैवम्; 'समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपि-ता या तादात्म्यसम्बन्धावच्छिन्ना कारणता–साकिञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिष्ठकार्यतानिरूपितदण्डनिष्ठकारणतावत्–' इति प्रयोगस्य वक्तुं शक्यत्वेन द्रव्यत्वजातिसिद्धेर्निष्प्रत्यूहत्वात्।

ननु विभुद्वयसंयोगवादिनां मते नित्यस्य तादृशसंयोगस्यापि सत्त्वात्संयोग-त्वावच्छिन्ना कार्यतैव न सम्भवति, अन्यूनाऽनतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वा-त्संयोगत्वस्य चाऽधिकदेशवृत्तितयाऽतथात्वादिति चेदुच्यते,–'संयोग'पदं विहाय 'विभाग' पदमुपादाय—'समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नकार्यतानिरू-पिता या कारणता, सा किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिष्ठकार्यतानिरू-पितदण्डनिष्ठकारणताव'दित्यनुमानेन तादृशविभागत्वावच्छिन्नकार्यतानिरू[illegible]-

रूप–रस–गन्ध–स्पर्श–सङ्ख्या–परिमाण–पृथक्त्व–संयोग–विभाग–परत्वा–ऽपरत्व–गुरुत्व–द्रवत्व–स्नेह–शब्द–बुद्धि–सुख–दुःखे–च्छा–द्वेष–प्रयत्न–धर्मा–ऽधर्म–संस्काराश्चतुर्विंशतिर्गुणाः[१] ।

उत्क्षेपणा-ऽपक्षेपणाऽऽकुञ्चन-प्रसारण-गमनानि पञ्च कर्माणि ।

परमपरञ्चेति द्विविधं सामान्यम् ।

### * पदकृत्यम् *

परमपरञ्चेति । परसामान्यमपरसामान्यमित्यर्थः । परत्वं चाऽधिक[२]देशवृत्तित्वम् । अपरत्वं–न्यूनदेशवृत्तित्वम् ।

---

### * बालमनोरमा *

कारणतावच्छेदकतया द्रव्यत्वजातिसिद्धेर्वक्तुं शक्यत्वादिति स्पष्टमन्यत्र ।

ननु 'द्रव्यत्वजातिमत्त्व'मिति द्रव्यलक्षणे लक्षणलक्ष्यतावच्छेदकयोरभेदादुद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधानुदयप्रसङ्ग इत्यरुचेराह–गुणवत्त्वमिति । उत्पन्नविनष्टे द्रव्ये, 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठती'ति नियमादुत्पत्तिकालावच्छिन्ने घटे च अव्याप्तिमाशङ्क्य लक्षणान्तरमाह–समवायीति (-पदकृत्ये) ।

१ चतुर्विंशतिरिति । प्रकृते चतुर्विंशतित्वं न सङ्ख्या, किन्तु अपेक्षाबुद्धिविशेषरूपमेव, अतो गुणे गुणाऽनङ्गीकारेऽपि न दोष इति ध्येयम् । गुणा इति । द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणत्वम् । गुणत्वजातिसिद्धिस्तु–'द्रव्यकर्मभिन्ने सामान्यवति या कारणता, सा किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्–'इत्यनुमानेनैव । 'या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना भवती'ति हि नियमः ।

२ अधिकेति । द्रव्यत्वाद्यपेक्षया सत्ताया अधिकदेशवृत्तितया परत्वं, द्रव्यत्वाद्यपेक्षयाऽल्पदेशवृत्तितया च पृथिवीत्वादिजातेरपरत्वम् । द्रव्यत्वादिजातेस्तु पृथि-

---

### * परीक्षा *

प्रश्नः—कति गुणाः ? किञ्च तल्लक्षणम् ? के च ते ? ।

उत्तरम्—चतुर्विंशतिर्गुणाः । ते च रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा–परत्व–गुरुत्व–द्रवत्व–स्नेह-शब्द-बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्म-संस्काराख्याः । द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वञ्च गुणलक्षणम् ।

प्रश्नः—कर्मणां लक्षणं लिख । कानि च कर्माणि ? ।

उत्तरम्—संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणत्वं कर्मत्वम् । उत्क्षेपणा-ऽपक्षेपणा-ऽऽकुञ्चन–प्रसारण—गमनानि च पञ्च कर्माणि ।

प्रश्नः—सामान्यं कतिविधं ?, किञ्च तल्लक्षणम् ? ।

उत्तरम्—परमपरञ्चेति द्विविधं सामान्यम् । परत्वम्–अधिकदेशवृत्तित्वम् । अपरत्वञ्च-न्यूनदेशवृत्तित्वम् । नित्यत्वे सति अनेकसमवेतत्वञ्च सामान्यस्य लक्षणम् ।

[1]नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव । [2]समवायस्त्वेक एव । [3]अभावश्चतुर्विधः । प्रागभावः, प्रध्वंसाभावोऽत्यन्ताऽभावोऽन्यो-

* बालमनोरमा *

वीत्वाद्यपेक्षयाऽधिकदेशवृत्तित्वात्परत्वं, सत्तापेक्षयाऽल्पदेशवृत्तित्वेन चाऽपरत्वमित्यन्यत्र विस्तरः । तदुक्तं-'द्रव्यत्वादिकजातिस्तु पराऽपरतयोच्यते ।' 'व्यापकत्वात्पराऽपि स्याद्, व्याप्यत्वादपराऽपि च ॥' इति ।

१ नित्यद्रव्याणि-पृथिव्यप्तेजोवायूनां परमाणवः, आकाशकालदिगात्ममनांसि च । सावयवानामनित्यद्रव्याणां घटादीनाङ्कपालाद्यवयवभेदात्परस्परं भेदः । परमाण्वादीनामनवयवानान्तु परस्परं भेदको विशेष एवेति तत्स्वीकारः । न च तद्व्यावर्त्तनाय तत्रापि विशेषस्वीकार इत्यनवस्थेति वाच्यं, तस्य स्वतो व्यावर्त्तकत्वादतिरिक्तस्य तस्याऽनपेक्षणात् ।

२ समवायस्त्विति । नित्यत्वे सति सम्बन्धत्वं समवायलक्षणम् । अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः-स एव समवायः । तत्सिद्धिस्तु-'रूपवान् घटः' 'नीलो घटः' इत्यादिविशिष्टबुद्धिः विशेषणविशेष्यविषया, विशिष्टबुद्धित्वात्, 'दण्डी पुरुष' इति विशिष्टबुद्धि वद्' इत्यनुमानेनैवेति संक्षेपः ।

३ अभावत्वञ्च—भावभिन्नत्वम् । भावत्वञ्च,-'समवाय'-'एकार्थसमवाय'-अन्यतरसम्बन्धेन सत्तावत्त्वमेव । एकार्थसमवायश्च स्वसमवायिसमवेतत्वम् । तत्र

* परीक्षा *

प्रश्नः-(१) विशेषस्य किं लक्षणम् ।

(२) विशेषः कतिविधः, कुत्र चासौ वर्त्तते ।

उत्तरं-(१) सामान्यशून्यत्वे सति, सामान्यभिन्नत्वे सति, समवायसम्बन्धेन वर्त्तमानत्वं विशेषस्य लक्षणम् । द्रव्यगुणकर्मवारणाय-'सामान्यशून्यत्वे सती'ति विशेषणम् । सामान्यव्युदासाय च-'सामान्यभिन्नत्वे सती'ति विशेषणम् । समवायस्य अभावस्य च निरासाय-'समवायसम्बन्धेन वर्त्तमानत्व'मिति विशेष्यदलम् । (२) नित्येषु पृथिव्यादिचतुष्टयपरमाणुषु, नित्येषु आकाशादिषु च वर्त्तमाना विशेषा अनन्ता एव ।

प्रश्नः-(१) समवायस्य किं लक्षणम् ? ।

(२) समवाय एकोऽनेको वा ? ।

उत्तरं-(१) नित्यत्वे सति सम्बन्धत्व'-समवायस्य लक्षणम् । तत्र संयोगवारणाय-'नित्यत्वे सती'ति विशेषणम् । परमाण्वादिवारणाय च-'सम्बन्धत्व'मिति ।

(२) लाघवात्—समवाय एक एव ।

ऽन्योन्याभावश्चेति ॥ * इत्युद्देशग्रन्थः *

[1]तत्र–गन्धवती पृथिवी । [2]सा द्विविधा–नित्या, अनित्या च ।

* न्यायबोधिनी *

गन्धवतीति । गन्धवत्त्वं पृथिव्या—लक्षणम् । लक्ष्या—पृथिवी ।

* पदकृत्यम् *

तदेव हि लक्षणं यत्–अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यम् । यथा गोः सास्नादिमत्त्वम् । अव्याप्तिश्च—लक्ष्यैकदेशाऽवृत्तित्वम् । अतएव गोर्न कपिलत्वं लक्षणं, तस्याऽव्याप्तिग्रस्तत्वात् । अतिव्याप्तिश्च—लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम् । अत एव गोर्न शृङ्गित्वं लक्षणं, तस्याऽतिव्याप्तिग्रस्तत्वात् ।

* बालमनोरमा *

समवायेन सत्तावत्त्वं द्रव्यगुणकर्मणाम् । सामान्य-विशेष-समवायानाञ्चैकार्थसमवायेन ( स्वसमवायिद्रव्यादिसमवेतत्वेन– ) सत्तावत्त्वमिति षट्सु भावेषु लक्षणसमन्वयः । 'अभावत्वम्–अखण्डोपाधिरनुयोगिताविशेषो वे'ति तु केचित् ।

१ तत्र = नवानां द्रव्याणां मध्ये । गन्धवतीति । समवायेन गन्धवत्त्वं पृथिव्या लक्षणमित्यर्थः । २ सा = पृथिवी । कार्यरूपा = घटादिकार्यस्वरूपा ।

पृथिवीमात्रं प्रकारान्तरेण विभजते मूले—पुनरिति । परमाण्वादेर्नित्यस्यापि शरीरेन्द्रियभिन्नत्वरूपविषयलक्षणाक्रान्तत्वात् । केचित्तु—कार्यपृथिव्या एवायं

* परीक्षा *

प्रश्नः–(१) अभावस्य किं लक्षणम् ? ।

(२) अभावः कतिविधः ? ।

उत्तरं-(१) भावभिन्नत्वं, प्रतियोगिज्ञानाधीनज्ञानविषयत्वं वा अभावलक्षणम् । (२) अभावश्च चतुर्विधः-प्रागभाव-प्रध्वंसाभावा-ऽत्यन्ताभाव-ऽन्योन्याभावभेदात् ।

प्रश्नः–(१) पृथिव्याः किं लक्षणम् ? ।

(२) पृथिवी च कतिविधा ? ।

उत्तरं-(१) समवायसम्बन्धेन गन्धवत्त्वं पृथिव्या लक्षणम् । ( २ ) पृथिवी द्विविधा-नित्याऽनित्यभेदात् । नित्या परमाणुरूपा, अनित्या घटादिकार्यरूपा । द्विविधाऽपि सा पृथिवी पुनश्च त्रिविधा—शरीरेन्द्रियविषयभेदात् । केचित्तु—अनित्यपृथिव्या एव त्रैविध्यं, न नित्यपृथिव्या इति सङ्गिरन्ते ।

नित्या-परमाणुरूपा। अनित्या-कार्यरूपा।
(सा) पुनस्त्रिविधा-शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्।

*** न्यायबोधिनी ***

[१]पृथिवीत्वं- लक्ष्यतावच्छेदकम्। [२]यद्धर्मावच्छिन्नं लक्ष्यं, स धर्मो लक्ष्यताऽवच्छेदकः। यो धर्मो यस्याऽवच्छेदकः, स तद्धर्मावच्छिन्नः। तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेत्, लक्ष्यता पृथिवीत्वाऽवच्छिन्ना।

[३]गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम्।

*** पदकृत्यम् ***

असम्भवश्च—लक्ष्यमात्राऽवृत्तित्वम्। यथा गोरेकशफवत्त्वं न लक्षणं, तस्य

---

*** बालमनोरमा ***

विभागः, परमाण्वादेः साक्षादुपभोगसाधनत्वाऽभावेन विषयत्वस्य तत्र वक्तुमशक्यत्वादित्याहुः। शरीरं=पार्थिवशरीरम्। गन्धग्राहकं=गन्धविषयकप्रत्यक्षजनकम्।

शरीरेन्द्रियभिन्नो विषयः। एवञ्च गन्धवच्छरीरं-पार्थिवशरीरम्। गन्धवदिन्द्रियं-पार्थिवेन्द्रियम्। गन्धवान् विषयः-पार्थिवविषय इति तत्तल्लक्षणं बोध्यम्।

पार्थिवं शरीरं दर्शयति-शरीरमिति। पार्थिवेन्द्रियं दर्शयति-इन्द्रियमिति। 'गन्धग्राहक'मिति प्रयोजनकथनम्। 'घ्राण'मिति सञ्ज्ञा। 'नासाग्रवर्ती'त्याश्रयोक्तिः। पार्थिवविषयं दर्शयति—मृदिति।

१ पृथिवीत्वमिति। गन्धसमवायिकारणतावच्छेदकतया च पृथिवीत्वजातिसिद्धिः। तथा च प्रयोगः—'गन्धसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना भवति, निरवच्छिन्नकारणताया असम्भवात्'। स च धर्मोऽत्र पृथिवीत्वमेव, अन्यूनानतिरिक्तवृत्तित्वादिति भावः।

२ यद्धर्मावच्छिन्नं = पृथिवीत्वादियद्धर्मावच्छिन्नम्। स धर्मः=पृथिवीत्वादिधर्मः। यो धर्मः = पृथिवीत्वादिरूपो यो धर्मः। यस्य=लक्ष्यस्य, लक्ष्यत्वस्य च। सः=लक्ष्यस्वरूपः, लक्ष्यत्वादिस्वरूपश्च। तद्धर्मावच्छिन्नः=पृथिवीत्वाद्यवच्छिन्नः। 'यद्धर्मावच्छिन्ना लक्ष्यता, स धर्मो लक्ष्यतावच्छेदकः, यो धर्मो यस्य अवच्छेदकः सा तद्धर्मावच्छिन्ना'—इति क्वाचित्कः पाठस्तु सुगमः। यस्याः = लक्ष्यतायाः।

३ गन्धस्याधिकरणे पृथिव्यां वर्त्तमाना या द्रव्यत्वव्याप्या पृथिवीत्वजातिः, तद्वत्त्वं पृथिव्या लक्षणम्। एवञ्चोत्पत्तिकालावच्छेदेन गुणशून्ये घटादौ, गन्धशून्ये मृत्पाषाणादौ च नाऽव्याप्तिः, तादृशजातिमत्त्वस्य तत्रापि सत्त्वादिति भावः।

इन्द्रियं गन्धग्राहकं घ्राणं—नासाग्रवर्त्ति। विषयो—मृत्पाषाणादिः॥

## * पदकृत्यम् *

असम्भवग्रस्तत्वात्। नित्येति। ध्वंसभिन्नत्वे सति [१]ध्वंसाऽप्रतियोगित्वं नित्यत्वम्। ध्वंसेऽतिव्याप्तिवारणाय 'ध्वंसभिन्ने'ति विशेषणम्। घटादावतिव्याप्तिवारणाय विशेष्यदलम्। ध्वंसप्रतियोगित्वं. [२]प्रागभावप्रतियोगित्वं वाऽनित्यत्वम्।

[३]यद्भोगायतनं तदेव शरीरं, चेष्टाश्रयो वा। इन्द्रियमिति। चक्षुरादावतिव्याप्तिवारणाय 'गन्धग्राहक'मिति। [४]कालादावतिप्रसक्तिवारणाय—'इन्द्रिय'मिति।

विषय इति। शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः। शरीरादा-

---

## * बालमनोरमा *

१ ध्वंसस्यापि ध्वंसाऽप्रतियोगित्वादतिव्याप्तिरतो 'ध्वंसभिन्नत्वे सती'त्युक्तम्। घटादेर्ध्वंसभिन्नत्वात्तत्राऽतिव्याप्तिरतो 'ध्वंसाऽप्रतियोगित्वे सती'त्युक्तमित्याशयः।

२ ननु 'ध्वंसप्रतियोगित्वमनित्यत्व'मित्यस्य स्वीकारे ध्वंसस्याप्यनित्यत्वं न स्यात्, ध्वंसस्य ध्वंसाऽभावेन ध्वंसस्य ध्वंसप्रतियोगित्वाऽभावादित्यरुचेराह—प्रागभावेति। ध्वंसस्य च प्रागभावप्रतियोगित्वं जन्यत्वादेवेति तत्सङ्गतिः। न चैवं जन्यत्वाऽभावेन प्रागभावस्यापि प्रागभावाऽप्रतियोगित्वादनित्यत्वं न स्यादिति वाच्यं, ध्वंसप्रागभावान्यतरप्रतियोगित्वमेव अनित्यत्वलक्षणमित्याशयेनाऽदोषात्।

३ आत्मनो भोगायतनं हि शरीरम्। यदवच्छिन्नात्मनि भोगो जायते, तद्भोगायतनम्। भोगश्च—सुखदुःखान्यतरसाक्षात्काररूपः।

नन्वात्मनः सुखदुःखान्यतरसाक्षात्कारावच्छेदकं शरीरमित्युक्तौ कालस्य देशस्याऽपि च सुखदुःखान्यतरसाक्षात्कारावच्छेदकत्वेन तत्रापि शरीरत्वव्यवहारापत्तिरित्यरुचेराह—चेष्टेति।

ननु चेष्टायाः क्रियाविशेषरूपाया हस्तादाववयवेऽपि सत्त्वात्तत्रापि शरीरपदव्यवहार्यतापत्तिरिति चेन्न; 'अन्त्यावयवित्वे सति, चेष्टाश्रयत्वं शरीरत्व'मित्यत्रैव तात्पर्येण हस्तादावन्त्यावयवित्वविरहेणाऽदोषात्। अन्त्यावयवित्वञ्च—'द्रव्यान्तराऽनारम्भकद्रव्यत्व'मिति स्पष्टमन्यत्र।

इन्द्रियत्वञ्च—शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति, ज्ञानकारणमनःसंयोगाश्रयत्वम्। आत्मन्यतिव्याप्तिवारणाय—सत्यन्तम्। श्रोत्रेन्द्रियेऽव्याप्तिवारणाय—'शब्देतरे'ति—उद्भूतविशेषगुणविशेषणम्। चक्षुरादावप्यनुद्भूतरूपादेः सत्त्वेन विशेषगुणाश्रयत्वादव्याप्त्यापत्तिरत—'उद्भूते'ति।

४ 'जन्यानां जनकः कालः' इत्यभियुक्तोक्तेः कालस्य जन्यमात्रं प्रति हेतुतया, गन्धविषयकसाक्षात्कारं प्रत्यपि हेतुतया, गन्धग्राहकत्वमात्रस्य तत्रातिप्रसक्तत्व-

[1]शीतस्पर्शवत्य आपः। ता द्विविधाः-नित्याः, अनित्याश्च। नित्याः-परमाणुरूपाः। अनित्याः-कार्यरूपाः।

(ताः) पुनस्त्रिविधाः-शरीरे-न्द्रिय-विषयभेदात्। शरीरं-वरुणलोके। इन्द्रियं—रसग्राहकं रसनं—जिह्वाग्रवर्ति। विषयः—सरित्समुद्रादिः॥

## * न्यायबोधिनी *

एवं शीतस्पर्शवत्त्वादिलक्षणेषु—जलादीनां लक्ष्यता, जलत्वादीनां लक्ष्यता-वच्छेदकत्वं बोध्यम्।

## * पदकृत्यम् *

वतिव्याप्तिनिरासाय सत्यन्तम्। परमाण्वादावतिव्याप्तिवारणाय—विशेष्यदलम्। [2]कालादिवारणाय 'जन्यत्वे सती'त्यपि बोध्यम्।

शीतेति। तेजआदावतिव्याप्तिवारणाय—'शीते'ति। आकाशवारणाय 'स्पर्शे'ति। कालादावतिप्रसक्तिवारणाय 'समवायसम्बन्धेने'ति पदं देयम्।

इन्द्रियमिति। [3]त्वगादावतिव्याप्तिवारणाय-'रसग्राहक'मिति। रसनेन्द्रिय-[4]रससंनिकर्षादावतिव्याप्तिनिरासाय—'इन्द्रिय'मिति। सरिदिति। आदिना

## * बालमनोरमा *

मित्याशयेनाह—कालादाविति। एवञ्च कालस्येन्द्रियत्वाऽभावान्नातिप्रसङ्ग इत्याशयः।

१ मूले—शीतेति। समवायसम्बन्धेन शीतस्पर्शवत्त्वं जलस्य लक्षण-मित्यर्थः। तेन कालिकसम्बन्धेन कालस्य, दैशिकविशेषणतासम्बन्धेन दिशोऽपि शीतस्पर्शवत्त्वेऽपि तत्र नाऽतिव्याप्तिः।

२ कालादीति। एवञ्च 'शरीरेन्द्रियभिन्नत्वे सति, जन्यत्वे च सति, उपभोग-साधनत्वं विषयत्व'मिति सिद्धम्।

३ 'त्वगादा'वित्यादिपदेन-घ्राणादिपरिग्रहः।

४ रसनेन्द्रियेण यो रसस्य सन्निकर्षः-स्वसंयुक्तसमवायात्मकः-(रसनेन्द्रियसंयुक्ताऽऽम्रादिसमवेतत्वान्मधुरादेः,)तद्वारणाय-इन्द्रियपदम्।सन्निकर्षस्तु न तथेत्याशयः।

## * परीक्षा *

प्रश्नः—(१) जलस्य लक्षणं लिख। (२) जलं कतिविधम्?।

उत्तरं—(१) समवायसम्बन्धेन शीतस्पर्शवत्त्वं—जलस्य लक्षणम्। जलं द्विविधं-नित्याऽनित्यभेदात्। नित्यं परमाणुरूपम्, अनित्यं कार्यजलादि-रूपम्। पुनश्च द्विविधमपि जलं-त्रिविधं,-शरीरेन्द्रियविषयभेदात्। शरीरं-वरुणलोके प्रसिद्धम्। इन्द्रियं रसग्राहकं रसनं, विषयः-सरित्समुद्रादिः।

[1]उष्णस्पर्शवत्तेजः। तच्च[2] द्विविधं-नित्यमनित्यञ्च। नित्यं-परमाणुरूपम्, अनित्यं कार्यरूपम्।

(तत्) [3]पुनस्त्रिविधं-शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके प्रसिद्धम्। इन्द्रियं-रूपग्राहकं[4] चक्षुः-कृष्णताराग्रवर्ति। विषयश्चतुर्विधो-भौमदिव्योदर्याऽऽकरजभेदात्। भौमं-वह्न्यादिकम्। दिव्यम्-[5]अबिन्धनम्-विद्युदादि। भुक्तस्य परिणामहेतुरुदर्यम्। आकरजं-सुवर्णादि।

* पदकृत्यम् *

—तडाग-हिम-करकादीनां[6] संग्रहः।

उष्णेति। जलादावतिव्याप्तिनिरासाय 'उष्णे'ति। कालादावतिप्रसङ्गवारणाय 'समवायसम्बन्धेने'ति पदं देयम्।

* बालमनोरमा *

१ समवायेन उष्णस्पर्शवत्त्वं तेजसो लक्षणम्। काले, दिशि चाऽतिव्याप्तिनिरासाय-'समवायसम्बन्धेने'ति विशेषणम्।

२ तच्च = तेजश्च। कार्यरूपं = वह्न्यादिरूपम्।

३ तेजःसामान्यं विभजते-पुनरिति। शरीरं=तैजसं शरीरम्। एवमग्रेऽपि।

४ रूपग्राहकं=रूपविषयकसाक्षात्कारजनकम्। कृष्णताराग्रवर्त्ति=चक्षुर्मध्यगोलकवर्त्ति। भौमं = भूमावुत्पन्नम्। 'वह्न्यादिक'मित्यादिपदात्-घर्षणोत्पन्नं भौमं विद्युदादि (कृत्रिम बिजली)।

५ अद्भिरिध्यते-प्रकाश्यते इति-अबिन्धनं = मेघगतजलसङ्घर्षणोद्भूतम्। भुक्तस्य=अन्नादेः, परिणामः=परिपाकः, तद्धेतुः=तज्जनकम्। उदरे भवम्-उदर्यम्।

६ आदिना-धूमिकाऽवश्यायादेः ('कोहरा' 'ओस' इत्याख्यस्य) परिग्रहः।

* परीक्षा *

प्रश्नः—(१) तेजसः किं लक्षणं, कतिविधञ्च तेजः ?।

उत्तरं—(१) समवायसम्बन्धेन उष्णस्पर्शवत्त्वं तेजसो लक्षणम्। तेजश्च-नित्याऽनित्यभेदेन द्विविधम्। शरीरेन्द्रियविषयभेदाच्च पुनस्तत्त्रिविधम्। शरीरमादित्यलोके। इन्द्रियं-चक्षुः। तैजसो विषयश्चतुर्विधः—भौमदिव्योदर्याकरजभेदात्। भौमं-वह्न्यादि। दिव्यम्-मेघजलोत्पन्नं विद्युदादि, तारकादिकञ्च। भुक्तान्नपाकहेतुः-उदर्यम्। आकरजं-सुवर्णरजतादि।

रूपरहितः स्पर्शवान्वायुः। स द्विविधः–नित्योऽनित्यश्च। नित्यः–परमाणुरूपः, अनित्यः–कार्यरूपः।

(स) पुनस्त्रिविधः–शरीरेन्द्रियविषयभेदात्।

[1]शरीरं–वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक्–सर्वशरीरवर्ति।

* न्यायबोधिनी *

एवं पृथिव्यादित्रिकं निरूप्य वायुं [2]निरूपयति–रूपरहित इति।

* पदकृत्यम् *

[ १४ पृष्ठे ] इन्द्रियमिति। घ्राणादावतिव्याप्तिवारणाय 'रूपग्राहक'मिति। कालादावतिव्याप्तिनिरसनाय—'इन्द्रिय'मिति। 'भेदा'दिति पदं–प्रत्येकमभि-[3]सम्बध्यते।

भौममिति। आदिपदेन खद्योतगततेजःप्रभृतेः[4] परिग्रहः[5]। विद्युदादीति। आदिना अर्कचन्द्रादीनां परिग्रहः। भुक्तेति। भुक्तस्य=अन्नादेः, पीतस्य जलस्य–परिणामो=जीर्णता, तस्य हेतुरुदर्यमित्यर्थः।

सुवर्णेति। आदिना–रजतादिपरिग्रहः।

रूपेति। घटादिवारणाय विशेषणम्। आकाशादिवारणाय विशेष्यम्। इन्द्रियमिति। चक्षुरादिवारणाय 'स्पर्शग्राहक'मिति। कालादावतिव्याप्तिवारणाय–

* बालमनोरमा *

१ शरीरं=वायवीयं शरीरम्। इन्द्रियं=वायवीयमिन्द्रियम्।

२ निपूर्वकरूपधात्वर्थश्च–लक्षण–स्वरूप- प्रामाण्यान्यतमप्रकारकज्ञानानुकूलो व्यापारः। आख्यातार्थः–कृतिः। तथा च वायुविषयलक्षणादिप्रकारकज्ञानानुकूल-व्यापारानुकूलकृतिमान्मूलकार इति शाब्दबोधः।

३ प्रत्येकमिति। भौमभेदात्, दिव्यभेदात्, उदर्यभेदात्, आकरजभेदाच्चे-त्येवं चतुर्भिः सह सम्बध्यते, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायात्।

४ 'प्रभृति पदेन-नरास्थिसारस्य [ फास्फरस ] दिव्यौषधीनाञ्च परिग्रहः। अर्केति। आदिना नक्षत्रग्रहज्योतिश्चक्रोल्कादिपरिग्रहः।

५ 'रजतादी'त्यादिना प्रकाशयुक्तधातुविशेषादेः ( रेडियम' इत्याख्यातस्य ) परिग्रहः। 'सर्वञ्च तैजसं लौह'मित्यमरप्रामाण्येन धातुमात्रस्यापि परिग्रहं केचिदिच्छन्ति।

'सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।
सीसं कालायसञ्चैवमष्टौ लौहानि चक्षते॥'

—इति च अष्टौ लौहानि। तत्र–रीतिः=पित्तलम्। त्रपु=रङ्गं [ रांगा ] 'सीसा' इत्याख्यम्। कालायसं=लोहविशेषः ('फौलाद' 'खेडी' इति प्रसिद्धः)।

विषयो—वृक्षादिकम्पनहेतुः ।

शरीरान्तःसञ्चारी वायुः—प्राणः ।

[1]स चैकोऽप्युपाधिभेदात्प्राणाऽपानादिसञ्ज्ञां लभते ।

*** न्यायबोधिनी ***

रूपरहितत्वे सति, स्पर्शवत्त्वं वायोर्लक्षणम् । सति सप्तम्या विशिष्टार्थकतया रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम्[2] । [3]विशेषणांशाऽनुपादाने स्पर्शवत्त्व-मात्रस्य लक्षणत्वे, पृथिव्यादित्रिकेऽतिव्याप्तिः, तद्वारणाय विशेषणोपादानम् । तावन्मात्रोपादाने आकाशादावतिव्याप्तिः, तद्वारणाय [4]विशेष्योपादानम् ।

अतिव्याप्तिर्नाम-अलक्ष्ये लक्षणसत्त्वम् । यथा—गोः शृङ्गित्वं लक्षणं कृतं चेत्—लक्ष्यभूत—गो—भिन्न—महिष्यादावतिव्याप्तिः, तत्रापि शृङ्गित्वस्य विद्यमानत्वात् ।

*** पदकृत्यम् ***

'इन्द्रिय'मिति । वृक्षेति । 'आदि'पदेन जलादिपरिग्रहः । शरीरान्तरिति । महावाय्वादावतिव्याप्तिवारणाय विशेषणम् । मनआदिवारणाय विशेष्यम् । धनञ्जयवारणाय[5]-'सञ्चारी'ति । उपाधीति । मुखनासिकाभ्यां निर्गमनप्रवेशनात्प्राणः,

---

*** बालमनोरमा ***

१ स च = शरीरान्तःसञ्चारी प्राणेऽपि । उपाधिभेदात् = हृदयादिनानाप्रदेश-सम्बन्धात्, विभिन्नक्रियाकारित्वाच्च । तदुक्तं—

'हृदि प्राणो, गुदेऽपानः, समानो नाभिसंस्थितः ।

उदानः कण्ठदेशे स्याद्, व्यानः सर्वशरीरगः ॥' इति । क्रियाभेदोऽपि यथा—प्राणनात्प्राणः, मलादेरधोनयनादपानः भुक्तस्य परिपाकार्थं जाठरस्योद्दीपनात्—समानः, रसादेरूर्ध्वं नयनात्-उदानः, सर्वशरीरे नाडीमुखेषु व्यापनात्-व्यानः, इति ।

१ 'वायोर्लक्षण'मित्यस्य—'निष्पन्न'मिति शेषः ।

३ विशेषणांशेति । रूपरहितत्वांशेत्यर्थः । लक्षणत्वे=वायुलक्षणत्वाङ्गीकारे । पृथिव्यादित्रिके=पृथिव्यां, जले, तेजसि च । अतिव्याप्तिः=स्पर्शवत्तया वायुलक्षणाऽतिप्रसङ्गः । तद्वारणाय=पृथिव्यादित्रिकेऽतिव्याप्तिवारणाय । विशेषणोपादानं=रूपरहितत्वांशोपादानम् । तद्वारणाय=आकाशेऽतिव्याप्तिवारणाय ।

४ विशेष्येति । स्पर्शवत्त्वांशेत्यर्थः । तदुपादाने तु गगनस्य स्पर्शवत्त्वाभावान्नातिव्याप्तिरिति भावः ।

५ धनञ्जयाख्यस्य वायुविशेषस्य शरीरान्तःस्थत्वेऽपि तस्य सञ्चारित्वाऽभावाद् तद्व्युदास इत्याशयः ।

*** न्यायबोधिनी ***

अव्याप्तिर्नाम—लक्ष्यैकदेशाऽवृत्तित्वम् । लक्ष्यैकदेशे=लक्ष्यतावच्छेदकाश्रयीभूते क्वचिल्लक्ष्ये,—लक्षणाऽसत्त्वमव्याप्तिरित्यर्थः । यथा गोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवि अव्याप्तिः. तत्र नीलरूपाऽभावात् ।

असम्भवो नाम—लक्ष्यमात्रे कुत्रापि लक्षणाऽसत्त्वम् । यथा गोरेकशफवत्त्वम् । गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वात् ।

अतिव्याप्त्यव्याप्त्यसम्भवानां निष्कृष्टलक्षणानि—[1]लक्ष्यतावच्छेदकसामानाधिकरण्ये सति, लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्—अतिव्याप्तिः । अव्याप्तिस्तु—[2]लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताऽभावप्रतियोगित्वम् । असम्भवस्तु—[3]लक्ष्यतावच्छेदकव्यापकीभूताऽभावप्रतियोगित्वम् ।

*** पदकृत्यम्**

जलादेरधोनयनादपानः, भुक्तपरिणामाय जाठरानलस्य समुन्नयनात्समानः, अन्ना-

---

*** बालमनोरमा ***

१ लक्ष्यतेति । 'गोः शृङ्गित्वं लक्षण'मित्यत्र—लक्ष्यो—गौः, लक्ष्यता-गवि, लक्ष्यतावच्छेदकं-गोत्वं, तदधिकरणं—गौः, तद्वृत्तित्वमप्यस्ति शृङ्गित्वे । एवं लक्ष्यतावच्छेदकं—गोत्वं, तदवच्छिन्नो गौः, तत्प्रतियोगिको यो भेदः-'गौर्न महिषी'त्यादिः, तदधिकरणं-महिषो, शृङ्गित्वे च तद्वृत्तित्वमप्यस्तीति-शृङ्गित्वमतिव्याप्तमित्युच्यते ।

२ लक्ष्यतावच्छेदकेति । गोर्नीलरूपवत्त्वे लक्षणे—लक्ष्यतावच्छेदकगोत्वाधिकरणश्वेतगवनिष्ठनीलरूपवत्त्वाऽत्यन्ताभावप्रतियोगित्वस्य नीलरूपवत्त्वे सत्त्वादव्याप्तिलक्षणसमन्वयात्-गोर्नीलरूपवत्त्वं लक्षणमव्याप्तमित्युच्यते ।

३ असम्भवस्त्विति । लक्ष्यतावच्छेदकवन्निष्ठात्यन्ताभावाऽप्रतियोगी योऽभावस्तत्प्रतियोगित्वमित्यर्थः । गोरेकशफवत्त्वलक्षणे लक्ष्यताच्छेदकगोत्ववद्गव-

---

*** परीक्षा ***

प्रश्नः—वायोः किं लक्षणम् ? । (२) स च ( वायुश्च ) कतिविधः ? ।

उत्तरं—(१) रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । (२) वायुर्द्विविधः, नित्याऽनित्यभेदात् । तत्र परमाणुरूपो वायुर्नित्यः । कार्यरूपो वायुरनित्यः । पुनरपि वायुस्त्रिविधः—शरीरेन्द्रियविषयभेदात् । शरीरं—वायुलोके, इन्द्रियं—त्वक्, विषयः—वृक्षादिकम्पनहेतुर्वायुः

[1]शब्दगुणकमाकाशम्[2] ॥ तच्चैकं, विभु,[3] नित्यञ्च ।

* न्यायबोधिनी *

आकाशं लक्षयति---शब्दगुणकमिति । 'गुण'पदम्–आकाशे शब्द एव विशेषगुण इति द्योतनाय, न त्वतिव्याप्तिवारणाय; समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात्। तच्चैकमिति । अनेकत्वे मानाऽभावादिति भावः ।

विभ्विति । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वञ्च क्रियावत्त्वम् ।

* पदकृत्यम् *

देरूर्ध्वंनयनादुदानः, नाडीमुखेषु विततनाद् व्यानः—इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियत इत्यर्थः ।

शब्देति । शब्दो गुणो यस्य तत्तथा । असम्भववारणाय—'शब्द'–'गुणो'-भयम् । विभ्विति । सर्वमूर्त्तद्रव्यसंयोगि ।

* बालमनोरमा *

निष्ठात्यन्ताभावाऽप्रतियोगी योऽभावः–'गवि एकशफवत्त्वं नास्ती'ति,तत्प्रतियोगित्वस्य एकशफवत्त्वे सत्त्वादसम्भवलक्षणस्य तत्र समन्वयः स्पष्टः ।

१ ननु 'शब्दगुणक'मित्यत्र समवायेन शब्दवत्त्वस्यैव सम्यक्त्वे, गुणपदोपादानं किमर्थमिति चेन्न, मीमांसकमते शब्दस्य द्रव्यतयाऽभिमतत्वेन तन्मतनिराससूचनाय, 'शब्द एव गगने विशेषगुण' इति सूचनाय च गुणपदोपादानस्यावश्यकत्वात् ।

२ नन्वाकाशस्य द्रव्यत्वे किं मानमिति चेन्न,परिशेषाऽनुमानस्यैव मानत्वात् । तथा हि—'शब्दो गुणः, अनित्यत्वे सति एकेन्द्रियग्राह्यजातिमत्त्वात्' इति । अनेनाऽनुमानेन शब्दस्य गुणत्वे सिद्धे—'शब्दोऽष्टद्रव्याऽनाश्रितः, श्रोत्रग्राह्यत्वात्, शब्दत्ववत्' इत्यनुमानेन पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सिद्धे, शब्दोऽष्टद्रव्यातिरिक्तद्रव्या–[–गगना–]–श्रितः, अष्टद्रव्याऽनाश्रितत्वे सति गुणत्वात्' इत्येवं परिशेषाऽनुमानेन शब्दाश्रितत्वेनाऽऽकाशरूपद्रव्यसिद्धिरित्यन्यत्र स्पष्टम् ।

३ विभुत्वञ्च सर्वमूर्त्तद्रव्यसंयोगित्वम् । मूर्त्तत्वञ्च-क्रियावत्त्वमेव । पृथिव्यप्तेजोवायुमनांसि च—मूर्त्तानि ।

* परीक्षा *

प्रश्नः—( १ ) आकाशस्य किं लक्षणम् ?। ( २ ) आकाशमेकविधमनेकविधं वा ? । ( ३ ) कि नाम विभुत्वम् ?।

उत्तरं—( १ ) समवायसम्बन्धेन शब्दाधिकरणत्वम्–आकाशस्य लक्षणम् ।

( २ ) आकाशमेकविधमेव,लाघवात् । अनेकविधत्वे प्रमाणाभावाच्च ।

( ३ ) सर्वमूर्तद्रव्यसंयोगित्वं–विभुत्वम् ।

मूर्त्तद्रव्याणि–पृथिव्यप्तेजोवायुमनांसि । मूर्त्तत्वञ्च क्रियावत्त्वम् ।

अतीतादिव्यवहारहेतुः [1]कालः। स चैको, विभुर्नित्यश्च।

* न्यायबोधिनी *

पृथिव्यप्तेजोवायुमनांसि मूर्त्तानि। 'पृथिव्यप्तेजोवाय्वाकाशे'ति पञ्चकं-'भूत' पदवाच्यम्। भूतत्वं नाम--बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्[2]।

कालं लक्षयति–अतीतेति। व्यवहारहेतुत्वस्य लक्षणत्वे [3]'घट' इति—

* पदकृत्यम् *

अतीतेति। 'अतीत' [4]इत्यादिर्यो व्यवहारः–'अतीतो', 'भविष्यन्' 'वर्तमान' इत्यात्मकः, तस्याऽसाधारणहेतुः काल इत्यर्थः।

नन्विदं लक्षणमाकाशेऽतिव्याप्तं, व्यवहारस्य [5]शब्दात्मकत्वादिति चेन्न, अत्र 'हेतु' पदेन निमित्तहेतोर्विवक्षितत्वात्। न चैवं कण्ठताल्वाद्यभिघातेऽ[6]तिव्याप्ति-रिति वाच्यं, विभुत्वस्याऽपि निवेशात्।

* बालमनोरमा *

१ एवञ्च अतीतादिव्यवहाराऽसाधारणनिमित्तकारणत्वे सति, विभुत्वमिति काललक्षणं निष्पन्नमिति बोध्यम्। कालद्रव्यसत्त्वे मानञ्च--'देवदत्तशरीरवृत्ति परत्वमपरत्वञ्च साऽसमवायिकारणकं, भावकार्यत्वा' दित्यनुमानेन परत्वा-ऽपरत्वयोरसमवायिकारणस्य सिद्धेरावश्यकतया, कालपिण्डसंयोगस्य च तथात्वेन, तद्घटकतया कालस्य सिद्धिरिति।

२ पृथिव्यप्तेजोवाय्वाकाशानां चक्षुरादिबहिरिन्द्रियग्राह्यगन्धरसरूपादि-विशेषगुणवत्त्वाद्भूतत्वमिति लक्षणसमन्वयः।

३ घट इति व्यवहारेति। 'घट' इत्याकारको यो व्यवहार इत्यर्थः। द्विविधो हि व्यवहारः— शब्दात्मकः, स्फुरणात्मकश्चेति तदाशयः।

४ अतीतत्वं—वर्त्तमानध्वंसप्रतियोगित्वम्। भविष्यत्त्वञ्च-वर्त्तमानप्रागभाव-प्रतियोगित्वम्। तदेवं-नष्टे घटे वर्त्तमानकालिकध्वंसप्रतियोगित्वस्य सत्त्वात्, भाविनि घटे च वर्त्तमानप्रागभावप्रतियोगित्वस्य सत्त्वाल्लक्षणसमन्वयो बोध्यः। वर्त्तमानत्वञ्च प्रयोगावच्छिन्नक्रियाधिकरणकालत्वं, भूतभविष्यद्भिन्नत्वे सति कालत्वं वा बोध्यम्।

५ शब्दात्मकाऽतीतादिव्यवहार-समवायिकारणत्वस्याकाशे सत्त्वात्तत्र काल-लक्षणातिव्याप्तिः प्रसक्ता, कारणपदेन निमित्तहेतोरेव विवक्षणेन–[समवायि-कारणस्याऽग्रहणेन—] वारणीयेत्याशयः।

६ तादृशाऽभिघातस्य शब्दात्मकव्यवहारे निमित्तहेतुत्वादित्याशयः।

* परीक्षा *

प्रश्नः—कालस्य किं लक्षणम्?।

उत्तरं—अतीतादिव्यवहाराऽसाधारणनिमित्तकारणत्वे, सति विभुत्वं कालस्य लक्षणम्।

दनन्तं, परमाणुरूपं, नित्यञ्च ।

चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च-शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्रभेदात्सप्तविधं, पृथिवीजलतेजोवृत्ति । तत्र—पृथिव्यां सप्तविधम् । [1]अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ।

* न्यायबोधिनी *

दुःखादिसाक्षात्कारकारणत्वे सति, इन्द्रियत्वं मनसो लक्षणम् ।

'इन्द्रियत्व' मात्रोक्तौ चक्षुरादावतिव्याप्तिः,[2]—अतः सुखादिसाक्षात्कारकारणत्वविशेषणम् । विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनः सुखादिकं प्रति समवायिकारणत्वात्, अत 'इन्द्रियत्व' रूपविशेष्योपादानम् ।

रूपं लक्षयति—चक्षुरिति । चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य

* पदकृत्यम् *

सुखेति । आत्ममनः[3]संयोगादिवारणाय—'इन्द्रिय'मिति । चक्षुरादिवारणाय 'सुखे'ति ।

चक्षुरिति । रूपत्वादिवारणाय 'गुण'पदम् । रसादिवारणाय 'चक्षुर्ग्राह्य' इति ।

---

* बालमनोरमा *

कोपाधिमत्त्वस्य लक्षणतया, तादृशद्रव्यविभाजकात्मत्वरूपोपाधिमत्त्वस्य तत्राप्यात्मनि सत्त्वात्समन्वयो बोध्यः । एवञ्च समवायसम्बन्धेन नित्यज्ञानाधिकरणत्वमीश्वरत्वमिति लब्धम् । एवं सुखादिसमवायिकारणत्वं, समवायसम्बन्धेन जन्यज्ञानाधिकरणत्वं वा जीवत्वमित्यप्यवधेयम् ।

१ अभास्वरशुक्लं=दीप्तिशून्यं ( चाकचिक्यशून्यं ) शुक्लं रूपम् । शुक्लं रूपं हि—द्विविधं भास्वरम्, अभास्वरञ्चेति भावः ।

२ अतिव्याप्तिरिति । चक्षुरादेरपीन्द्रियत्वात् । विशेष्यानुपादाने='इन्द्रिय'-मित्यस्यानुपादाने । अतिव्याप्तिमुपपादयति-आत्मन इति ।

३ आत्ममन इति । आत्ममनःसंयोगस्यापि सुखाद्युपलब्धिसाधनतया तत्राऽतिव्याप्तिरत इन्द्रियत्वमुपात्तं, तादृशसंयोगश्च नेन्द्रियमिति न दोष इत्याशयः ।

---

* परीक्षा *

प्रश्नः—( १ ) रूपं कतिविधं ? । ( २ ) रूपस्य किं लक्षणम् ? ।
( ३ ) कुत्र च कीदृशं रूपम् ? ।

उत्तरं—(१) रूपं सप्तविधं, शुक्लनीलपीतादिभेदात् । (२) चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति, चक्षुर्जन्यप्रत्यक्षविषयत्वे च सति, गुणत्वं रूपस्य लक्षणम् ।
(३) तच्च पृथिवीजलतेजोवृत्ति । तत्र भास्वरशुक्लं रूपं तेजसि, अभास्वरशुक्लं जले, पृथिव्यान्तु सप्तविधं रूपं वर्त्तते ।

* न्यायबोधिनी *

लक्षणम्। [1]विशेष्यमात्रोपादाने रसादावतिव्याप्तिः, अतश्चक्षुर्मात्रग्राह्यत्वं विशेषणम्। तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः,–'यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्ये'ति नियमात्. तद्वारणाय विशेष्योपादानम्[2]।

चक्षुर्मात्रग्राह्यत्वं नाम–चक्षुर्भिन्नेन्द्रियाऽग्राह्यत्वे सति, चक्षुर्ग्राह्यत्वम्। 'मात्र'-पदानुपादाने सङ्ख्यादिसामान्यगुणेऽतिव्याप्तिः। चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य तत्रापि सत्त्वात्, अतस्तद्वारणाय 'मात्र'पदम्। सङ्ख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति। अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय-'चक्षुर्ग्राह्ये'ति।

अत्र लक्षणे ग्राह्यत्वं नाम-प्रत्यक्षविषयत्वम्। अग्राह्यत्वं नाम[3]तदविषयत्वम्। [4]तथा च–'चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति, चक्षुर्जन्यप्रत्यक्षविषयत्व'मिति [5]फलितोऽर्थः. ननु प्रभा–घटसंयोगे रूपलक्षणस्याऽतिव्याप्तिस्तस्य[6]चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न, गुणपदस्य विशेषगुणपरत्वात्। [7]न चैवं विशेषगुणत्वघटितलक्षणे सङ्ख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति[8] वाच्यं; जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात्।

* बालमनोरमा *

१ विशेष्यमात्रेति। गुणत्वमात्रेत्यर्थः। अतिव्याप्तिरिति। रसादेरपि गुणत्वात्। तावन्मात्रेति। चक्षुर्मात्रग्राह्यत्वरूपविशेषणमात्रेत्यर्थः। रूपत्वेऽतिव्याप्तिमुपपादयति–यो गुण इति। एवञ्च रूपस्य चक्षुरिन्द्रियग्राह्यतया तद्गतरूपत्वजातेरपि चक्षुरिन्द्रियग्राह्यत्वस्य सत्त्वादतिव्याप्तिरतो 'गुणत्व' मित्युक्तम्। रूपत्वञ्च जातिर्न तु गुण इति तत्त्वम्।

२ एवञ्च ( पूर्वोक्तरीत्या ) रसनेन्द्रियभिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति, रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे च सति, गुणत्वं रसस्य लक्षणमित्यवधेयम्।

३ तदविषयत्वं = प्रत्यक्षाऽविषयत्वम्।

४ तथा च = ग्राह्यत्वाऽग्राह्यत्वयोरुक्तप्रकारेण निर्वचने च।

५ फलितोऽर्थः = विशेषणांशस्य—चक्षुर्मात्रग्राह्यत्वे सतीत्यस्यायमर्थः। एवञ्च गुणत्वरूपविशेष्यांशोऽपि निविष्ट एवेत्यवधेयम्।

६ तस्य = प्रभाघटसंयोगात्मकस्य गुणस्य। विशेषगुणेति। विशेषगुणाश्च–

'रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः।
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः॥' इत्युक्ताः।

७ एवं = प्रभाघटसंयोगवारणाय विशेषगुणोपादानस्यावश्यकत्वे।

८ सङ्ख्यादेर्विशेषगुणत्वाऽभावादेवातिव्याप्तेरभावात्।

रसनग्राह्यो गुणो रसः । स च मधुरा-ऽम्ल-लवण-कटु-कषाय-तिक्तभेदात्-षड्विधः । पृथवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव ।

### * न्यायबबोधिनी *

[1]अथवा-चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः, संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाऽभावात् । घट-पटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् । यो गुणो [2]यदिन्द्रियग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात् । अत्र[3]जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजाति-

### * पदकृत्यम् *

सङ्ख्यादिवारणाय 'मात्र' पदम् । यद्यपि प्रभाभित्तिसंयोगवारणाय गुणपदेन विशेषगुणस्य विवक्षणीयतया तत एव सङ्ख्यादिवारणं संभवतीति मात्रपदं व्यर्थं, तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम् । वस्तुतस्तु परमाणुरूपेऽव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया 'विशेष' पदं न देयम् । त्र्यणुकादिवारणाय 'गुण' पदं तु देयम् । सप्तेति । 'रूप'मित्यनुषज्ज्यते ।

रसनेति । [4]रसत्वादिवारणाय'गुण'इति । रूपादावतिव्याप्तिवारणाय'रसने'ति । तत्रेति । पृथिवी-जलयोरित्यर्थः । षड्विध इति । अत्र 'रस' इत्यनुवर्तते ।

### * बालमनोरमा *

१ विशेषपदाघटिततया लाघवाल्लक्षणान्तरमाह—अथवेति ।

२ तदेवोपपादयति—यदिति । अपि शब्देन— तदभावस्यापि ग्रहणम् ।

३ अत्र = 'अथवा'कल्पोक्ते ।

४ रसत्वेति । रसगताया रसत्वजातेरपि रसनेन्द्रियमात्रग्राह्यतया तत्रातिव्याप्तिवारणाय 'गुण' इति विशेष्योपादानमित्यर्थः ।

### * परीक्षा *

प्रश्नः—( १ ) रसस्य किं लक्षणम् ? ( २ ) रसः कतिविधः ? ।
( ३ ) कुत्र च कीदृशो रसः ? ।

उत्तरं—( १ ) रसनेन्द्रियभिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति, रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे च सति, गुणत्वं लक्षणम् । ( २ ) रसः षड्विधः—मधुराम्ललवणादिभेदात् । (३) रसः पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधो रसः । जले तु मधुर एव रसः । जले लवणादिरसप्रतीतिस्त्वौपाधिक्येव ।

[1]घ्राणग्राह्यो गुणो गन्धः। स[2] च द्विविधः-सुरभिरसुरभिश्च। -पृथिवीमात्रवृत्तिः।

### * न्यायबोधिनी *

मति सुवर्णादावतिव्याप्तिरतस्तद्वारणाय तदुपादानम्।

### * पदकृत्यम् *

घ्राणग्राह्य इति। गन्धत्वादावतिव्याप्तिवारणाय 'गुण' इति। रूपादावतिव्याप्तिवारणाय-'घ्राणग्राह्य' इति। पृथिवीति। 'पृथिवीसम्बन्धसत्त्वे गन्धप्रतीतिसत्त्वं', 'पृथिवीसम्बन्धाऽभावे गन्धप्रतीत्यभावः'-इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव जले प्रतीतिर्बोध्या। एवं वायावपि।

ननु देशान्तरस्थकस्तूरीकुसुमसम्बद्धपवनस्यैतद्देशे तत्सम्बन्धाऽभावाद् गन्धप्रतीत्यनुपपत्तिः। न च वाय्वानीतत्र्यणुकादिसम्बन्धोऽस्त्येवेति वाच्यं, कस्तूर्या [3]न्यूनतापत्तेः, कुसुमस्य च सच्छिद्रत्वापत्तेरिति चेन्न; भोक्त्रदृष्टविशेषेण [4]पूर्ववत्-

---

### * बालमनोरमा *

१ घ्राणग्राह्यत्वे सति, गुणत्वं गन्धस्य लक्षणम्। घ्राणातिरिक्तेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति, घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे च सति, गुणत्वमिति तु यावत्।

२ सः = गन्धः। सुरभिरसुरभिश्चेति। सुरभ्यसुरभिभेदादित्यर्थः। तत्र सुरभिः = मनस आह्लादस्य जनकः। [ सुगन्ध ]। असुरभिः=दुर्गन्धः।

तत्र गन्धस्याऽधिकरणं दर्शयति—पृथिवीमात्रेति।

३ न्यूनतापत्तेरिति। त्र्यणुकाद्यपगमे कियताऽपि कालेन कस्तूर्यादेरल्पपरिमाणतापत्तिः, पुष्पस्य च सच्छिद्रतापत्तिरिति भावः।

४ पूर्ववदिति। यादृशस्य, यत्परिमाणकस्य च त्र्यणुकस्यापगमस्तत्परिमाणकस्य, तत्सजातीयस्य च त्र्यणुकान्तरस्य पुष्पादौ भोक्तुः = पुरुषादेरदृष्टविशेषात्-तदैवोत्पत्त्या न कस्तूर्यादेर्न्यूनपरिमाणतापत्तिरिति भावः।

---

### * परीक्षा *

प्रश्नः—(१) गन्धस्य किं लक्षणम्?। (२) स च गन्धः कतिविधः?। (३) कुत्र चासौ गन्धो वर्त्तते?, कीदृशश्च सः?।

उत्तरम्—(१) घ्राणग्राह्यत्वे सति गुणत्वं गन्धस्य लक्षणम्। रूपादावतिव्याप्तिवारणाय 'घ्राणग्राह्यत्वे सती'ति विशेषणम्। गन्धत्वादावतिव्याप्तिवारणाय-'गुणत्व' मिति विशेष्यम्। (२) स च गन्धो द्विविधः-सुरभ्यसुरभिभेदात्। (३) द्विविधोऽपि गन्धः-पृथिवीमात्रवृत्तिः, पाकजोऽनित्यश्च।

त्वगिन्द्रियमात्रग्राह्यो[1] गुणः स्पर्शः। स च त्रिविधः-शीतोष्णाऽनु-[2]ष्णाऽशीतभेदात्। पृथिव्यप्तेजोवायुवृत्तिः।

### * न्यायबोधिनी *

एवं रसादिलक्षणे-विशेषणानुपादाने लक्ष्यभिन्नगुणादावतिव्याप्तिः। विशेष्यानुपादाने लक्ष्यमात्रवृत्ति-रसत्व-गन्धत्वादावतिव्याप्तिः, अतो विशेषणविशेष्ययोरुभयोरुपादानम्।

स्पर्शं लक्षयति—त्वगिन्द्रियमात्रग्राह्य इति। अत्रापि 'मात्र' पदं

### * पदकृत्यम् *

त्र्यणुकान्तराद्युत्पत्तेः। कर्पूरादौ तु [3]तदभावान्न तथात्वमिति।

त्वगिति। स्पर्शत्वादावतिव्याप्तिवारणाय-'गुण'इति। रूपादावतिव्याप्तिवारणाय

---

### * बालमनोरमा *

१ त्वगिन्द्रियमात्रग्राह्यत्वञ्च-(पूर्ववदेव)-त्वगिन्द्रियातिरिक्तेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति,त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे च सति,गुणत्वमिति परिष्करणीयम्।

२ शीतस्पर्शः, उष्णस्पर्शः, अनुष्णाऽशीतस्पर्शश्चेति त्रिविधः स्पर्श इत्यर्थः। तत्र स्पर्शः क्व वर्त्तते इत्याशङ्क्याह—पृथिव्यबिति। तत्र=त्रिविधस्पर्शमध्ये। शीतः=शीतस्पर्शः। अनुष्णाशीत इति। नापि उष्णो, नापि शीतः, किन्तु तदतिरिक्त एवायं स्पर्शविशेषः। घटादिरूपे पृथिव्यादौ शीतस्पर्शानुभवस्तु जलकणसंपर्कवशादेवेति भावः। एव सुवर्णादौ तेजसि उष्णस्पर्शाननुभवोऽन्यादृशस्पर्शानुभवश्च प्रतिबन्धकादिवशादेवेति।

३ तदभावात्=अदृष्टविशेषस्य तादृशत्र्यणुकादिजनकस्याभावात्।'अभावा'-दित्यस्य च-अकल्पनादित्यर्थः। दृष्टद्वारैवाऽदृष्टस्य कल्पनाया औचित्येन कर्पूरादेः क्रमशो ह्रासस्य दर्शनात्तत्र तादृशत्र्यणुकान्तरजनकस्याऽदृष्टस्य कल्पना न क्रियते इति भावः।

---

### * परीक्षा *

प्रश्नः—(१) स्पर्शस्य किं लक्षणम्?। (२) स च स्पर्शः कतिविधः?। कुत्र चासौ स्पर्शो वर्त्तते? कीदृशश्च स्पर्शः?।

उत्तरम्—(१) त्वगिन्द्रियमात्रग्राह्यत्वे सति, गुणत्वं स्पर्शस्य लक्षणम्। रूपादावतिव्याप्तिवारणाय 'त्वगिन्द्रिये'ति विशेषणम्। स्पर्शत्वादावतिव्याप्तिवारणाय-'गुणत्व'मिति विशेष्यम्। (२) स च स्पर्शः त्रिविधः-शीतोष्णाऽनुष्णाऽशीतभेदात्। तत्र-शीतः स्पर्शो जले। उष्णस्पर्शस्तेजसि। अनुष्णाशीतस्पर्शो वायुपृथिव्योरेवेति विवेकः। तत्र पृथिव्यां स्पर्शोऽनित्यः-पाकजत्वात्। जलतेजोवायुषु तु-अपाकजः। स च स्पर्शः-परमाण्वादिनित्यगतो नित्यः, द्व्यणुकादिकार्यनिष्ठोऽनित्यश्चेत्यवधेयम्।

तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाऽशीतः—पृथिवीवाय्वोः।
[1]रूपादिचतुष्टयं-पृथिव्यां [2]पाकजमनित्यञ्च। अन्यत्राऽपाकजं [3]नित्यमनित्यञ्च। [4]नित्यगतं—नित्यम्, अनित्यगतमनित्यम्।

* न्यायबोधिनी *

सङ्ख्यादिसामान्यगुणादावतिव्याप्तिवारणाय। अन्यविशेषणकृत्यं पूर्ववद्बोध्यम्। 'ग्राह्यत्व'पदार्थोऽपि पूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः।

**रूपादिचतुष्टयमिति**। [5]एतत्तत्त्वनिर्णयश्चेत्थं—

**पाको** नाम विजातीयतेजःसंयोगः। स च नानाजातीयरूपजनको, विजातीयः तेजःसंयोगः। तदपेक्षया रसजनको-विजातीयः। एवं गन्धजनकोऽपि ततो-विजातीय एव। एवं स्पर्शजनकोऽपि-तथैव। एवं प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः। यथा तृणपुञ्जनिक्षिप्ते आम्रादौ ऊष्मलक्षणविजातीय-तेजस्संयोगात्पूर्वहरितरूपनाशेन, रूपान्तरस्य पीतादेरुत्पत्तिर्नतु रसादेरुत्पत्तिः। पूर्वरसस्याऽम्लस्यैवानुभवात्। क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते। विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाऽम्लरसनाशेन मधुररसस्यानुभवात्।

* पदकृत्यम् *

'त्वगिन्द्रिये'ति। सङ्ख्यादिवारणाय 'मात्र'पदम्। तत्रेति। पृथिव्यादिचतुष्टये। शीत इति। शीतस्पर्शः। उष्ण इति। उष्णस्पर्शः।

---

* बालमनोरमा *

१ रूपादिचतुष्टयं=रूप-रस-गन्ध-स्पर्शेतिचतुष्टयम्। पाकजं=पाकाख्य-विलक्षणतेजःसंयोगजन्यम्। आम्रादौ विलक्षणतेजःसंयोगादिना (सूर्यकिरण-धान्यपलालादिसंयोगादिना-) पूर्वमनुभूयमानस्य-रूपस्य, रसस्य, गन्धस्य, कठिनादिस्पर्शस्य च विनाशः, रूपान्तरादेश्चोत्पत्तिः सर्वानुभवसिद्धेति तत्त्वम्।

२ यतः पाकजम्-अत एव-अनित्यमिति योजना।

३ अन्यत्र=जलतेजोवायुषु। यद्यपि जलादौ रूपादिचतुष्टयं बाधितं, तथापि यथायोग्यमन्वयेऽत्र तात्पर्यम्। तदेवं-जले-रूपरसस्पर्शाः, तेजसि-रूपस्पर्शौ, वायौ तु स्पर्शमात्रञ्च-अपाकजं, नित्यमनित्यञ्चेति लब्धमिति तत्त्वम्।

४ नित्यगतं=जलतेजोवायुपरमाणुगतम्। अनित्यगतं=जलतेजोवायुसम्बन्धि-द्व्यणुकादिकार्यनिष्ठम्। ५ एतत्तत्त्वनिर्णय इति। रूपादिचतुष्टयस्य पृथिव्यामुत्पत्तिप्रकारो, विनाशप्रकारश्च वक्ष्यमाणप्रकारेण बोध्य इत्यर्थः।

[1]एकत्वादिव्यवहारहेतुः सङ्ख्या । [2]सा नवद्रव्यवृत्तिः—एकत्वादिपरार्धपर्यन्ता । एकत्वं—नित्यमनित्यं च । नित्यगतं—नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकन्तु—सर्वत्राऽनित्यमेव ।

### * न्यायबोधिनी *

तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः । एवं गन्धजनको विलक्षण एव, रूप-रसयोरपरावृत्तावपि पूर्वगन्धनाशेऽपि, विजातीयपाकवशात्सुरभिगन्धोपलब्धेः । एवं स्पर्शजनकः । पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात् । तस्माद्रूपादिजनका विजातीया एव पाकाः । अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः । यथा गोभुक्ततृणादीनामापरमाणवन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते । तदुत्तरं तादृशरूपरसादय उत्पद्यन्ते । तादृशरूपरसादिविशिष्टपरमाणुभिः—

### * पदकृत्यम् *

एकत्वादीति । 'एकत्व'मित्यादिर्यो व्यवहारः—'एको' 'द्वा'वित्याद्यात्मकः, तस्य हेतुः सङ्ख्या इत्यर्थः । घटादिवारणाय—'एकत्वादी'ति । कालादिवारणाय- 'असाधारणे'त्यपि देयम् । ननु सङ्ख्याया अवधिरस्ति, न वेत्यत आह—एकत्वादीति । तथा च—

---

### * बालमनोरमा *

१ एकत्वेति । 'एकत्वं' 'द्वित्वं' 'त्रित्वं' 'चतुष्ट्व'मित्यादिर्यो व्यवहारः—'अयमेको घटः' 'इमौ द्वौ घटौ' 'इमे त्रयो घटाः' 'इमे चत्वारो घटा' इत्यादिरूपेण लोके प्रसिद्धः, तस्य हेतुः=असाधारणं कारणं—सङ्ख्येत्यक्षरार्थः ।

२ सा = निरुक्तलोकव्यवहाराऽसाधारणकारणीभूता सङ्ख्या ।

नवद्रव्यवृत्तिः=पृथिव्यप्तेजोवाय्वाकाशकालादिनवद्रव्यवृत्तिः ।

३ एकत्वेति । एकत्वमादिर्यस्याः, परार्धः=परार्धत्वं—पर्यन्ते=अन्ते—यस्याः सेत्यर्थः । नित्यगतं = पृथिव्यादिचतुष्टयपरमाणु-गगन-काल-दिगात्म-मनोगतम् ।

---

### * परीक्षा *

**प्रश्नः**—सङ्ख्यायाः किं लक्षणम् ? । कुत्र च सा वर्त्तते ?

**उत्तरम्**—एकत्वद्वित्वादिव्यवहाराऽसाधारणकारणत्वं सङ्ख्याया लक्षणम् । सा च सङ्ख्या पृथिव्यादिनवद्रव्यवृत्तिः ।

मानव्यवहाराऽसाधारणं कारणं परिमाणं,–नवद्रव्यवृत्ति। तच्चतुर्विधम्-अणु, महद्, दीर्घं, ह्रस्वञ्चेति।

* न्यायबोधिनी *

दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः। एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते। एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक्।

* पदकृत्यम् *

'एकं दशं शतं चैव सहस्र-मयुतं[1] तथा। लक्षं च नियुतञ्चैव कोटिरर्बुदमेव च॥ वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः। अन्त्यं मध्यं परार्धञ्च दश-वृद्ध्या यथाक्रमम्॥' इति महदुक्तेः परार्धपर्यन्तैव सङ्ख्येति भावः।

मानेति। मानं=परिमितिस्तस्या[2] यो व्यवहारः='इदं महत्', 'इदमणु'–इत्याद्यात्मकः, तस्य कारणं परिमाणमित्यर्थः। [3]दण्डादिवारणाय—'माने'ति। कालादिवारणाय–'असाधारणे'ति। शब्दत्ववारणाय–'कारण'मिति। नवद्रव्येति। चतुर्विधमपि परम-मध्य भेदेन द्विविधम्। तत्र परमाणुह्रस्वत्वे–परमाणुमनसोः, मध्यमाणुह्रस्वत्वे-द्व्यणुके,परममहत्त्वदीर्घत्वे–गगनादौ,मध्यममहत्त्वदीर्घत्वे घटादौ। 'एतन्मौक्तिकादिदं मौक्तिकमणु' इति व्यवहारस्यापकृष्टमहत्त्वाश्रयत्वाद् गौणत्वं बोध्यम्। एवमेव '[4]केतनाद् व्यजनं ह्रस्व'मित्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम्।

* बालमनोरमा *

१ अयुतं=दश सहस्रम् (दशहजार)। नियुतं=दश लक्षम् (दशलाख)।

२ परिमितिः=परिमाणम्। (नाप तोल)। कारणम्=असाधारणकारणम्।

३ दण्डादीति। घटादिकारणे दण्डादावित्यर्थः। परमाण्विति। परमाणुत्वं, परमह्रस्वत्वञ्च परमाणौ मनसि चेत्यर्थः। एवं-मध्याऽणुत्वं, मध्यह्रस्वत्वञ्च द्व्यणुके, परममहत्त्वं परमदीर्घत्वञ्च गगनादौ, मध्यमहत्त्वं मध्यदीर्घत्वञ्च घट-पटादाविति योजना।

४ केतनं=ध्वजः। व्यजनं=तालवृन्तम्।

* परीक्षा *

प्रश्नः—परिमाणस्य किं लक्षणम्?। परिमाणञ्च केषु द्रव्येषु तिष्ठति?। कतिविधञ्चतत्?।

उत्तरम्—'इदं महत्' 'इदमणु' 'इदं दीर्घम्' 'इदं ह्रस्व'मित्यादिपरिमिति-व्यवहाराऽसाधारणकारणत्वं परिमाणत्वम्। दण्डादिरूपे घटाऽसाधारणकारणेऽतिव्याप्तिवारणाय–व्यवहारान्तम्। कालादिवारणाय–असाधारणेति। परिमाणञ्च पृथिव्यादिनवद्रव्यवृत्ति। तच्च अणु-मह-द्दीर्घ-ह्रस्वभेदाच्चतुर्विधम्।

पृथग्व्यवहाराऽसाधारणकारणं पृथक्त्वं—[1]सर्वद्रव्यवृत्ति ।

[2]संयुक्तव्यवहारहेतुः—संयोगः । सर्वद्रव्यवृत्तिः ।

* पदकृत्यम् *

पृथगिति । '[3]अयमस्मात्पृथ'गिति यो व्यवहारस्तस्य कारणं पृथक्त्वमित्यर्थः । दण्डादिवारणाय 'पृथ'गित्यादि । कालादिवारणाय—'असाधारणे'ति । पृथग्व्यवहारत्ववारणाय—'कारण'मिति ॥

संयुक्तेति । 'इमौ संयुक्ता'विति यो व्यवहारस्तस्य हेतुः संयोग इत्यर्थः । दण्डादिवारणाय 'संयुक्तव्यवहारे'ति । कालादिवारणाय—'असाधारणे'त्यपि देयम् । संयुक्तत्वेऽतिप्रसक्तिवारणाय 'हेतु'रिति । [4]उपदर्शितलक्षणचतुष्टयेऽसाधारणपदं देयम् । [5]क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे ईश्वरेच्छादिवारणाय—असाधारणे'ति दृश्यते, तत्तु—आधुनिकैर्न्यस्तमिति बोध्यम् ।

* बालमनोरमा *

१ सर्वद्रव्येति । पृथिव्यादिनवद्रव्येत्यर्थः ।

२ 'इमौ संयुक्तौ' 'इमे संयुक्ताः' इत्यादिव्यवहाराऽसाधारणकारणत्वे सति गुणत्वं संयोगत्वं=संयोगस्य लक्षणमित्यर्थः । सर्वद्रव्यवृत्तिः=पृथिव्यादिनवद्रव्यवृत्तिः ।

३ अयमस्मादिति । 'अयं घटः पटात्पृथ'गित्यर्थः । कारणमितीति । पृथग्व्यहारे पृथग्व्यवहारत्वं वर्तते, तच्च तदसाधारणमतस्तत्रातिव्याप्तिरतस्तन्निरासाय कारणपदोपादानमित्यर्थः

४ चतुष्टये ।=सङ्ख्या-परिमाण-पृथक्त्व-संयोगलक्षणचतुष्टये । ५ क्वचिदिति । पुस्तके=तर्कसङ्ग्रहमूलग्रन्थे । दृश्यते=निक्षिप्तं दृश्यते । एवञ्च मूले मानव्यवहारकारणं परिमाणं' 'पृथग्व्यवहारकारणं पृथक्त्व'मित्येव साम्प्रदायिकः पाठ इति सूचितम् ।

* परीक्षा *

प्रश्नः—पृथक्त्वस्य किं लक्षणम् ? कुत्र च पृथक्त्वं वर्त्तते ? ।

उत्तरम्—'अयमस्मात्पृथ' गिति व्यवहाराऽसाधारणत्वे सति, कारणत्वं पृथक्त्वस्य लक्षणम् । तत्र दण्डादिवारणाय—पृथग्व्यहारेति । कालादिवारणाय असाधारणेति । पृथग्व्यवहारत्वधर्मस्याऽपि पृथग्व्यवहाराऽसाधारणत्वात्तत्रातिव्याप्तिवारणाय—कारणत्वमिति । तच्च पृथक्त्वं पृथिव्यादिनवद्रव्यवृत्ति ।

प्रश्नः—संयोगस्य किं लक्षणं ? । कुत्र च स संयोगो वर्त्तते ? ।

उत्तरम्—'इमौ संयुक्ता'विति व्यवहाराऽसाधारणत्वे सति, कारणत्वं संयोगस्य लक्षणम् । तत्र दण्डादिवारणाय—व्यवहारान्तम् । कालादिवारणाय-असाधारणेति । संयुक्तव्यवहारत्वरूपे संयुक्तव्यवहारनिष्ठे धर्मेऽतिप्रसक्तिनिरासाय कारणत्व' मिति । स च संयोगः पृथिव्यादिसर्वद्रव्यवृत्तिः ।

**संयोगनाशको गुणो विभागः। सर्वद्रव्यवृत्तिः।**

**पराऽपरव्यवहाराऽसाधारणकारणे-परत्वाऽपरत्वे, पृथिव्यादिचतुष्टय-मनो-वृत्तिनी। ते च[1] द्विविधे-दिक्कृते, कालकृते चेति[1]।**

*** न्यायबोधिनी ***

विभागं लक्षयति-**संयोगेति**। संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम्। विशेषणमात्रोपादाने[2] क्रियाया अपि संयोगनाशकत्वात्तत्राऽतिव्याप्ति-

*** पदकृत्यम् ***

**संयोगेति। संयोगनाशजनक इत्यर्थः। कालेऽतिऽप्रसक्तिवारणाय 'गुण'-पदम्। ईश्वरेच्छादिवारणाय-'असाधारणे' त्यपि बोध्यम्।**

**ननु असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यादिति चेन्न; क्रियायामति-प्रसक्तिवारणाय तस्याप्यावश्यकत्वात्।**

---

*** बालमनोरमा ***

**१ ते च=परत्वाऽपरत्वे च। एवञ्च दिक्कृतं परत्वं, कालकृतं-परत्वं, दिक्कृतमपरत्वं, कालकृतमपरत्वमिति प्रत्येकं तयोर्द्वैविध्यमित्याशयः। दूरस्थे=दूरस्थिते पर्वते, वृक्षादौ च। समीपस्थे=निकटवर्त्तिनि घटादौ। ज्येष्ठे=ज्येष्ठभ्रात्रादौ। कालकृतं=वर्षमासदिनादिरूपकालनिबन्धनम्।**

**२ विशेषणेति। संयोगनाशकत्वमात्रोपादाने इत्यर्थः। विशेष्योपादाने तु**

---

*** परीक्षा ***

**प्रश्नः**-विभागस्य किं लक्षणं ?। कुत्र च स विभागाख्यो गुणो वर्त्तते ?।

**उत्तरम्**-संयोगनाशाऽसाधारणकारणत्वे सति गुणत्वं विभागस्य लक्षणम्। रूपादावतिव्याप्तिवारणाय सत्यन्तम्। क्रियाया अपि संयोगनाशकत्वात्तत्राऽतिव्याप्ति-वारणाय च 'गुणत्व मिति विशेष्योपादानम्, विभागश्च पृथिव्यादिनवद्रव्यवृत्तिरेव।

**प्रश्नः**-परत्वस्य किं लक्षणम् ? कुत्र च परत्वं तिष्ठति, कतिविधञ्च तत् ?।

**उत्तरम्**-परव्यवहाराऽसाधारणत्वे सति कारणत्वं परत्वम्। तत्र दण्डादिवारणाय-**परव्यवहारेति**। कालादिवारणाय-**असाधारणेति**। परव्यवहारत्वरूपे धर्मेऽति-व्याप्तिवारणाय-**कारणमिति**। तच्च परत्वं पृथिवी-जल-तेजो-वायु-मनोवृत्ति। परत्वञ्च द्विविधं-दिक्कृतं, कालकृतञ्च। तत्र दूरस्थे पर्वतादौ दिक्कृतं परत्वम्। ज्येष्ठे भ्रात्रादौ कालकृतं परत्वम्। तत्रापि पृथिव्यादिचतुष्टये दिक्कृतं, कालकृतं च परत्वम्। मनसि तु दिक्कृतमेव परत्वं, न तु कालकृतमिति विवेकः।

**प्रश्नः**-अपरत्वस्य किं लक्षणं ?। कुत्र चापरत्वं वर्त्तते ?, कतिविधञ्च तत् ?

**उत्तरम्**-'अयमस्मादपरः' इति व्यवहाराऽसाधारणत्वे सति, कारणत्वमपरत्वम्।

दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम्।

आद्यपतनाऽसमवायिकारणं[1] गुरुत्वं, पृथिवी-जल-वृत्ति।

*** न्यायबोधिनी ***

स्तद्वारणाय 'गुणत्व' मिति विशेष्योपादानम्।

गुरुत्वं लक्षयति—आद्येति। द्वितीयपतनक्रियायां वेगस्याऽसमवायि-

*** पदकृत्यम् ***

परेति। परव्यवहाराऽसाधारणं कारणं परत्वम्, अपरव्यवहाराऽसाधारणं कारणमपरत्वमित्यर्थः। [2]दण्डादिवारणाय—'परव्यवहारे'ति। कालादिवारणाय—'असाधारणे'ति। 'परव्यवहारत्व'वारणाय 'कारणे'ति। [3]एवमेव द्वितीयेऽपि बोध्यम्।

आद्येति। दण्डादिवारणाय—'असमवायी'ति। [4]रूपादिवारणाय 'पतने'ति। वेगेऽतिव्याप्तिवारणाय—'आद्ये'ति।

---

*** बालमनोरमा ***

क्रियाया गुणत्वाभावान्नातिव्याप्तिरित्याशयः। ननु 'संयोगनाशजनकत्वे सति, गुणत्व' मिति लक्षणस्य संयोगे ( संयोगस्यापि संयोगनाशं प्रति प्रतियोगिविधया हेतुतया ) ऽव्याप्तिरिति चेन्न, प्रतियोगित्वसम्बन्धानवच्छिन्नायास्तादृशनाशजनकताया एव लक्षणे विवक्षणेनाऽदोषात्।

१ आद्यपतनेति। पतने आद्यत्वञ्च—स्वसमानाधिकरणपतनध्वंसाऽसमानकालिकत्वम्। एवञ्च—स्वसमानाधिकरणपतनध्वंसाऽसमानकालिकपतनाऽसमवायिकारणत्वं गुरुत्वमिति लक्षणं पर्यवसन्नम्। स्वं = पतनम्।

२ दण्डादीति। 'आद्यपतनकारण' मित्येतावदुक्तौ दण्डलोष्टादेरपि वृक्षस्थफलपतनकारणतया तत्रातिव्याप्तिरतोऽसमवायिकारणपदमुपात्तम्। तदुपादाने च दण्डलोष्टादेरतथात्वान्न दोष इत्याशयः। ३ द्वितीये = अपरत्वलक्षणे।

४ रूपादीति। 'आद्यगुणासमवायिकारण'मित्येतावदुक्तौ घटपटादिगतरूपं प्रति कपालतन्त्वादिरूपस्यासमवायिकारणतया तत्राऽतिव्याप्तिरतः 'पतने'त्युपादेयमित्याशयः।

---

*** परीक्षा ***

तत्र दण्डादिवारणाय-व्यवहारान्तम्। कालादिवारणाय—असाधारणेति। अपरव्यवहारत्वरूपे धर्मेऽव्याप्तिवारणाय—कारणत्वमिति। तच्च अपरत्वं- पृथिवी—जल—तेजो-वायु—मनोवृत्ति। तच्च द्विविधं—दिक्कृतं, कालकृतञ्च। तत्र समीपस्थे घटादौ दिक्कृतमपरत्वं, कनिष्ठे भ्रातरि च कालकृतमपरत्वमिति विवेकः।

**प्रश्नः**—गुरुत्वस्य किं लक्षणं, कुत्र च गुरुत्वं वर्त्तते?।

**उत्तरम्**—आद्यपतनाऽसमवायिकारणत्वं गुरुत्वम्। कारणत्वस्य दण्डादावपि

आद्यस्यन्दनाऽसमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । [1]तद् द्विविधम् । सांसिद्धिकं, नैमित्तिकञ्च । सांसिद्धिकं जले । नैमित्तिकं-पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि [2]सुवर्णादौ ।

*** न्यायबोधिनी ***

कारणत्वात्तत्राऽतिव्याप्तिवारणाय-'आद्ये'ति । [3]उत्तरत्र स्यन्दने 'आद्य'विशेषणमपि पूर्ववदेव योजनीयम् ।

*** पदकृत्यम् ***

आद्यस्यन्दनेति । दण्डादिवारणाय-'असमवायी'ति । रसादिवारणाय-'स्यन्दने'ति ।

---

*** बालमनोरमा ***

१ तत्=द्रवत्वम् । सांसिद्धिकम्=अग्निसंयोगादिरूपकारणान्तराऽजन्यं स्वाभाविकम् । नैमित्तिकं=अग्निसंयोगादिकारणान्तरजन्यम् । घृतादौ=पार्थिवतया सर्ववादिभिः सम्प्रतिपन्ने घृतादौ । अग्निसंयोगजं=नैमित्तिकम् । २ सुवर्णादौ=सुवर्णरजतादौ । 'अग्निसंयोगजं द्रवत्व'मिति शेषः । ३ उत्तरत्र=द्रवत्वलक्षणे ।

---

*** परीक्षा ***

सत्त्वात्तत्रातिव्याप्तिवारणाय-असमवायीति । घटरूपादौ कपालरूपादेरपि असमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय-पतनेति । द्वितीयपतनादौ वेगस्याऽसमवायिकारणत्वात्तत्रातिव्याप्तिरतः-आद्येति । पतने आद्यत्वञ्च-स्वसमानाधिकरणपतनप्रतियोगिकध्वंसाऽसमानकालिकत्वम् । स्वं-पतनम् ।

प्रश्नः—(१) द्रवत्वस्य किं लक्षणं (२) तच्च द्रवत्वं कतिविधं, कुत्र च कीदृशम् ?

उत्तरम्—(१) आद्यस्यन्दनाऽसमवायिकारणत्वं द्रवत्वस्य लक्षणम् । आद्यत्वञ्च स्यन्दने-स्वसमानाधिकरण-स्यन्दनप्रतियोगिकध्वंसा-ऽसमानकालिकत्वम् ।

द्वितीयस्यन्दनादावाद्यस्यन्दनप्रतियोगिकध्वंससमानकालिकत्वादेव नाऽऽद्यत्वम् । 'असमवायी'त्यपहाय-'आद्यस्यन्दनकारणं द्रवत्व'-मित्येतावन्मात्रोक्तौ दण्डादावतिव्याप्तिः, दण्डादिना घटभङ्गे दण्डादेरपि घटस्थजलगताऽऽद्यस्यन्दने निमित्तकारणत्वात् । 'असमवायिकरणं द्रवत्व'मित्युक्तौ जम्बीराद्यवयविगताऽम्लादिरसं प्रत्यवयवगतरसस्याऽसमवायिकारणतया तत्राऽतिव्याप्तिरतः 'आद्यस्यन्दने'ति ।

(२) द्रवत्वं द्विविधं, सांसिद्धिकं, नैमित्तिकञ्च । तत्र-सांसिद्धिकं जले, नैमित्तिकमग्निसंयोगजं घृतादिरूपपृथिव्यां, सुवर्णादौ तेजसि चेति विवेकः ।

[1]चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥

*** न्यायबोधिनी ***

स्नेहं लक्षयति—चूर्णादीति । चूर्णादिपिण्डीभावहेतुत्वे सति, गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम-चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणः संयोगः । [2]तादृशसंयोगे स्नेहस्यैवाऽसाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य, तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेरतः स्नेह एवाऽसाधारणं [3]कारणम् । विशेषणमात्रोपादाने—कालादावतिव्याप्तिरतस्तद्वारणाय विशेष्योपादानम् । वस्तुतस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वं, स्नेहस्य पिण्डीभावहेतुत्वे मानाऽभावात् । जले द्रुतत्वविशेषणात्करका[4]दिव्यावृत्तिः ।

*** पदकृत्यम् ***

चूर्णादीति । चूर्णं=पिष्टं, तदेवादिर्यस्य-मृत्तिकादेः—स चूर्णादिः, तस्य पिण्डीभावः=संयोगविशेषस्तस्य हेतुः=निमित्तकारणं-स्नेह इत्यर्थः । कालादावतिव्याप्तिवारणाय—'गुण'पदम् । रूपादावतिव्याप्तिवारणाय='पिण्डीभावे'ति । 'चूर्ण'-पदं स्पष्टार्थम् ॥

---

*** बालमनोरमा ***

१ चूर्णं=गोधूमादिचूर्णं, मृदादिचूर्णञ्च । ('चूना' 'आटा' 'मिट्टी' 'चून' आदि)।

२ तादृशसंयोगे=धारणाकर्षणहेतुभूते पिण्डीभावाख्ये विलक्षणसंयोगे ।

तथा सति = जलादिगतद्रवत्वस्यैव तादृशपिण्डीभावाख्ये विलक्षणसंयोगे हेतुत्वाङ्गीकारे तु । सुवर्णरूपतेजोगतद्रवत्वस्य तत्र सत्त्वेन तत्र पिण्डीभावापत्तिरिति भावः ।

३ कारणं=धारणाकर्षणहेतुभूते पिण्डीभावाख्ये विलक्षणे संयोगे स्नेह एवाऽसाधारणं कारणम् । विशेषणेति । चूर्णादिपिण्डीभावहेतुत्वमात्रोपादाने, गुणत्वरूपविशेष्यानुपादाने चेत्यर्थः ।

४ करकादयः=वर्षोपलादयः । ('ओला' 'पत्थर') । आदिपदेन, हिमादिसंग्रहः ।

---

*** परीक्षा ***

प्रश्नः—स्नेहस्य किं लक्षणं ?, स च स्नेहः कुत्र वर्त्तते ? ।

उत्तरम्—चूर्णादिपिण्डीभावाऽसाधारणनिमित्तकारणत्वे सति गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम चूर्ण-मृत्तिका-पिष्टादिधारणाकर्षणहेतुभूतो विलक्षणः संयोगः । स्नेहस्यैव हि-पिण्डीभावेऽसाधारणकारणता नतु जलादिगतद्रवत्वस्य, द्रुतसुवर्णसंयोगेनापि चूर्णादीनां पिण्डीभावापत्तेः । गुणपदानुपादाने कालादावतिव्याप्तिः । 'चूर्णादिपिण्डीभावं' पदानुपादाने रूपरसादावतिव्याप्तिरत उभयमुपात्तम् । स च स्नेहो जले एव वर्त्तते, नान्यत्र ।

श्रोत्रग्राह्यो गुणः शब्दः। आकाशमात्रवृत्तिः। स[1] द्विविधः। ध्वन्यात्मको, वर्णात्मकश्च। तत्र[2] ध्वन्यात्मको-भेर्यादौ। वर्णात्मकः—संस्कृतभाषादिरूपः।

### * न्यायबोधिनी *

शब्दं लक्षयति-श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय[3] 'गुण' इति। रूपादावतिव्याप्तिवारणाय-'श्रोत्रे'ति।

स त्रिविधः-(१) संयोगजः (२) विभागजः (३) शब्दजश्चेति (१) यथा भेरीदण्डसंयोगजो झाङ्कारादिशब्दः, हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः। (२) वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः। (३) शब्दोत्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन, कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते। तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम्।

### * पदकृत्यम् *

श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय-'गुण' इति। रूपादिवारणाय 'श्रोत्रग्राह्य' इति। वस्तुतस्तु श्रोत्रोत्पन्न[4]शब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद् गुणपदमनु[5]पादेयमेव।

---

### * बालमनोरमा *

१ स=शब्दः। २ तत्र=द्विविधेऽपि शब्दे।

३ शब्दत्वस्यापि श्रोत्रग्राह्यत्वात्तत्राऽतिव्याप्तिरतो गुणपदोपादानमित्यर्थः।

४ श्रोत्रोत्पन्नशब्दस्यैवेत्येवकारेण भेर्यादिजन्यशब्दव्यावृत्तिः। तद्भिन्ने=श्रोत्रोत्पन्नशब्दे।

५ अनुपादेयमिति। शब्दत्वे श्रोत्रग्राह्यजातिमत्त्वस्याऽभावादेव तन्निराससम्भवात्।

---

### * परीक्षा *

प्रश्नः-शब्दस्य किं लक्षणं, स च शब्दः कतिविधः?। कुत्र च शब्दो वर्त्तते।

उत्तरम्—श्रोत्रातिरिक्तेन्द्रियाऽग्राह्यत्वे सति, श्रोत्रेन्द्रियग्राह्यत्वे च सति, गुणत्वं शब्दस्य लक्षणम्। श्रोत्रेन्द्रियग्राह्ये शब्दत्वेऽतिव्याप्तिवारणाय-'गुण' इति। चक्षुरादिग्राह्ये रूपरसादावतिव्याप्तिवारणाय-श्रोत्रेति। स च शब्दो द्विविधः; ध्वन्यात्मको, वर्णात्मकश्च। तत्र ध्वन्यात्मको भेरीमृदङ्गादौ वर्तते। वर्णात्मकश्च संस्कृतभाषाकाव्यादिरूपः। स च शब्दो गगने एव वर्त्तते।

[1]सर्वव्यवहारहेतुर्गुणो [2]बुद्धिर्ज्ञानम् ।
सा द्विधा । स्मृतिरनुभवश्च ।
संस्कारमात्रजन्यं ज्ञानं स्मृतिः ।

* न्यायबोधिनी *

बुद्धेर्लक्षणमाह—सर्वव्यवहारेति । व्यवहारः—शब्दप्रयोगः । ज्ञानं विना शब्दप्रयोगाऽसम्भवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् ।

बुद्धिं विभजते—सा द्विविधेति ।

स्मृतिं लक्षयति-संस्कारेति । संस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् । विशेषणा[3]नुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिरतस्तद्वारणाय विशेषणोपादानम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम् ।

* पदकृत्यम् *

बुद्धिलक्षणमाह-सर्वेति । सर्वे ये व्यवहाराः = आहारविहारादयस्तेषां हेतुर्बुद्धिरित्यर्थः । दण्डादिवारणाय-'सर्वव्यवहारे'ति । कालादिवारणाय-'असाधारणे'त्यपि देयम् ।

संस्कारेति । संस्कारध्वंसेऽतिव्याप्तिवारणाय 'ज्ञान'मिति । अनुभवेऽतिव्याप्तिवारणाय-'संस्कारजन्य'मिति । तथापि प्रत्यभिज्ञायामतिव्याप्ति-

---

* बालमनोरमा *

१ सर्वव्यवहाराऽसाधारणकारणत्वे सति, गुणत्वं बुद्धेर्लक्षणमित्यर्थः । घटादिकारणे दण्डादावतिव्याप्तिवारणाय-'सर्वव्यवहारे'ति । कालादिवारणाया-'साधारणे'ति ।

२ बुद्धिर्ज्ञानमिति पर्यायशब्दाविमौ, न तु साङ्ख्यानामिव तार्किकाणां मतेऽपि परस्परं बुद्धिज्ञानयोर्भेद इति सूचयितुं- ज्ञान'मिति पर्यायोपादानम् ।

३ विशेषणानुपादाने=प्रत्यक्षज्ञानजन्यत्वविशिष्टेत्यंशानुपादाने प्रत्यक्षानुभवे= 'अयं घट' इति प्रत्यक्षात्मकेऽनुभवे । तादृशानुभवस्यापि ज्ञानत्वादतिव्याप्तिरतो

---

* परीक्षा *

प्रश्नः—१ बुद्धेः किं लक्षणं, ? कतिविधा च सा बुद्धिः ? ।

उत्तरम्-आहार-विहार-शब्दप्रयोगादिरूप-व्यवहाराऽसाधारणकारणत्वे सति, गुणत्वं बुद्धेर्लक्षणम् । ज्ञानं विना शब्दप्रयोगाद्यसम्भवाच्छब्दप्रयोगरूपव्यवहारे बुद्धेरसाधारणकारणत्वम् । घटादिकारणे दण्डादावतिव्याप्तिवारणाय-सर्वव्यवहारेति । कालादावतिव्याप्तिवारणाय-असाधारणेति । सा च बुद्धिर्द्विविधा, स्मृतिरनुभवश्चेति विवेकः ।

प्रश्नः—स्मृतेर्लक्षणं सपदकृत्यं वद ।

उत्तरम्-इन्द्रियार्थसंनिकर्षाऽजन्यत्वे सति संस्कारजन्यत्वे च सति,ज्ञानत्वं स्मृते-

**तद्भिन्नं ज्ञानमनुभवः। स द्विविधो यथार्थोऽयथार्थश्च ॥**

*** न्यायबोधिनी ***

ध्वंसम्प्रति[1] प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात्। प्रत्यभिज्ञायामतिव्याप्तिवारणाय 'मात्र'पदम्।

अनुभवं लक्षयति—**तद्भिन्नमिति**। तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम्। स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम्। तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिरतस्तद्वारणाय विशेषण-विशेष्ययोरुभयोरुपादानम्।

अनुभवं विभजते—**स द्विविध इति**।

*** पदकृत्यम् ***

वारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम्। क्वचित्तथैव पाठः। न चैवं सत्य-सम्भवः, तस्य संस्कारजन्यत्वे सतीन्द्रियार्थसन्निकर्षाऽजन्यार्थकत्वात्।

तदिति। स्मृतित्वावच्छिन्नभिन्नमित्यर्थः। तेन यत्किञ्चित्स्मृतिभिन्नत्वस्य स्मृतौ सत्त्वेऽपि न क्षतिः। घटादावतिव्याप्तिवारणाय 'ज्ञान'मिति। स्मृतिवारणाय 'तद्भिन्न'मिति।

---

*** बालमनोरमा ***

विशेषणोपादानमित्याशयः। विशेष्योपादानम्=ज्ञानत्वांशोपादानम्।

१ विशेष्यानुपादानेऽतिव्याप्तिं सङ्गमयति-ध्वंसमिति।

---

*** परीक्षा ***

लक्षणम्। ध्वंसं प्रति प्रतियोगिनः कारणतया संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्वात्तत्रातिव्याप्तिवारणाय ज्ञानपदोपादानम्। प्रत्यक्षाद्यनुभवेऽतिव्याप्तिवारणाय-संस्कारजन्यत्वे सतीति विशेषणांशोपादानम्। संस्कारेन्द्रियसंनिकर्षोभयजन्यायां प्रत्यभिज्ञायामतिव्याप्तिवारणाय च-मात्रपदं। प्रकृते मात्रपदञ्च इन्द्रियार्थसन्निकर्षाऽजन्यार्थकम्, अन्यथा स्मृतेरप्यदृष्टादिसाधारणजन्यतया मात्रपदोपादानेऽसम्भवापत्तेरिति सङ्क्षेपः।

**प्रश्नः**—(१) अनुभवस्य किं लक्षणम्?। (२) स च कतिविधः?।

**उत्तरं**—स्मृतिभिन्नत्वे सति ज्ञानत्वमनुभवस्य लक्षणम्। स्मृतिभिन्नत्वांशानुपादाने स्मृतावेवाऽतिव्याप्तिः, ज्ञानपदानुपादाने घटादावतिव्याप्तिरत उभयोरुपादानम्। (२) अनुभवश्च द्विविधो यथार्थाऽयथार्थभेदात्।

तद्वति तत्प्रकारकोऽनुभवो यथार्थः । सैव 'प्रमे'त्युच्यते ॥

## * न्यायबोधिनी *

यथार्थानुभवं लक्षयति—तद्वतीति । 'तद्वती'त्यत्र सप्तम्यर्थो विशेष्यत्वम्[1] । तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः ।

तथा च तद्वद्विशेष्यकत्वे सति, तत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम् । उदाहरणम्-रजते 'इदं रजतम्' इति ज्ञानम् । अत्र रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः ।

'तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्व'मिति तु निष्कर्षः । [2]अन्यथा यथाश्रुते रङ्ग-रजतयोः-'इमे रजत-रङ्गे' इत्याकारकसमूहालम्बकभ्रमेऽतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्व-रजतत्वप्रकारकत्वयोः सत्त्वात् । उक्त-निष्कर्षे तु नाऽतिव्याप्तिः, रजतत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाऽभावात् । एवं-रङ्गत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वाभावत् ।

## * पदकृत्यम् *

तद्वतीति । तद्वति तत् प्रकारो यस्य स तथेत्यर्थः । तद्वद्विशेष्यकः, तत्प्रकारक इति यावत् । स्मृतिवारणाय—'अनुभव' इति । अयथार्थानुभववारणाय 'तद्वती'ति । निर्विकल्पकेऽतिव्याप्तिवारणाय—'तत्प्रकारक' इति ।

---

## * बालमनोरमा *

१ विशेष्यत्वं = विशेष्यतानिरूपकत्वम् । 'विशेष्यत्व'मिति क्वचित्पाठः, तत्र निरूपकत्वसम्बन्धेनानुभवेऽन्वयो बोध्यः । प्रकारीभूतो धर्मः = घटत्वरजतत्वादिः । २ अन्यथा = निरूप्यनिरूपकभावाऽविवक्षायाम् । तद्वद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वमित्येतावन्मात्रविवक्षायामिति यावत् । तत्रापि = तादृशे-समूहालम्बनात्मकभ्रमे । उक्तनिष्कर्षे=प्रकारत्वविशेष्यत्वयोः परस्परनिरूप्यनिरूपकभावविवक्षया तद्वन्निष्ठविशेष्यतानिरूपितप्रकारतानिरूपकत्वमित्येवं निष्कर्षे ।

---

## * परीक्षा *

प्रश्नः—यथार्थानुभवस्य यथार्थप्रमाया वा किं लक्षणम् ? । किञ्च तदुदाहरणम् ? ।

उत्तरम्- तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तत्प्रकारकानुभवत्वं-यथार्थानुभवस्य यथार्थप्रमायाश्च लक्षणम् । यथा रजते 'इदं रजत' मितिज्ञानं प्रमा । अत्र हि रजतत्ववद्रजतविशेष्यकत्वं रजतत्वप्रकारकत्वञ्च 'इदं रजत'मिति ज्ञानेऽस्तीति लक्षणसमन्वयः । अयथार्थानुभवेऽतिव्याप्तिवारणाय—तद्वतीति । निर्विकल्पकज्ञानेऽतिव्याप्तिवारणाय—तत्प्रकारक इति । स्मृतावतिव्याप्तिवारणाय— अनुभव इति ।

तद् भाववति तत्प्रकारकोऽयथार्थः ॥
यथार्थानुभवश्चतुर्विधः। प्रत्यक्षानुमित्युपमितिशाब्दभेदात् ॥

*** न्यायबोधिनी ***

किन्तु समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वात् । एवं रजतांशे—रङ्गत्वावगाहित्वेन रङ्गत्व-प्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाच्चेति । नानामुख्यविशेष्यताशालिज्ञानं समूहालम्बनम् ।

अयथार्थानुभवं लक्षयति-तदभाववतीति। अत्रापि [१]पूर्ववत्—तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं विवक्षणीयम् । [२]अन्यथा रङ्ग-रजतयोः—'इमे रङ्ग-रजते'इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिः । एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन, रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्व–रजतत्वप्रकारकत्वयोः, रङ्गत्वाऽभाववद्रजतविशेष्यकत्व–रङ्गत्वप्रकारकत्वयोश्च सत्त्वात् ।

*** पदकृत्यम् ***

तद्भावेति। तदभाववद्विशेष्यकतत्प्रकारकोऽनुभवोऽयथार्थानुभव इत्यर्थः । यथा शुक्तौ-'इदं रजतम्' इति ज्ञानम् । स्मृतिवारणाय-'अनुभव' इति । यथार्थानुभवेऽतिव्याप्तिनिरसनाय 'तदभाववती'ति । निर्विकल्पकवारणाय 'तत्प्रकारक' इति ।

यथार्थेति। यथार्थानुभवः प्रत्यक्षमेवेति चार्वाकाः । अनुमितिरपीति काणादबौद्धाः । उपमितिरपीति-नैयायिकैकदेशिनः । शाब्दमपीति

*** बालमनोरमा ***

१ पूर्ववत्=यथार्थानुभवोक्तरीत्या। २ अन्यथा=विषयतयोः परस्परनिरूप्य-

---

*** परीक्षा ***

प्रश्नः—अयथार्थानुभवस्य किं लक्षणं ? किञ्च तदुदाहरणम् ?।

उत्तरम्—तदभाववद्विशेष्यतानिरूपकत्वे सति, तन्निष्ठप्रकारतानिरूपकत्वमयथार्थानुभवस्य लक्षणम् । उदाहरणञ्च—शुक्तौ 'इदं रजत'मिति ज्ञानम् । अत्र हि-'रजतत्वाभाववच्छुक्तिनिष्ठविशेष्यतानिरूपकत्वं रजतत्वनिष्ठप्रकारतानिरूपकत्वञ्चास्तीति लक्षणसमन्वयः। स्मृतिवारणाय-अनुभवपदम् । यथार्थानुभवेऽतिव्याप्तिवारणाय-तदभाववतीत्युक्तम्। निर्विकल्पकेऽतिव्याप्तिवारणाय 'तत्प्रकारक'इत्युपात्तम्।

तत्करणमपि चतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात् । असाधारणं कारणं करणम् ॥

* न्यायबोधिनी *

[1]निष्कर्षे तु रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गविशेष्यतानिरूपितत्वाभावात् । एवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावान्नातिव्याप्तिः । उदाहरणम्–यथा शुक्तौ 'इदं रजतम्' इति ।

तत्करणमिति । फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः । प्रत्यक्षादिचतुर्विधप्रमाणानां—प्रमाकरणत्वं सामान्यलक्षणम् । एकैकप्रमाणलक्षणन्तु वक्ष्यते–प्रत्यक्षज्ञानेत्यादिना ।

करणलक्षणमाह—**असाधारणमिति** । व्यापारवदसाधारणं कारणं करणमित्यर्थः । असाधारणत्वञ्च कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरू-

* पदकृत्यम् *

नैयायिकाः । अर्थापत्तिरपीति प्राभाकराः । आनुपलब्धिकोऽपीति भाट्टवेदान्तिनौ । साम्भविकैतिह्यकावपीति पौराणिकाः । चैष्टिकोऽपीति तान्त्रिकाः । एतेषां मतेऽस्वरसं सम्भाव्य तस्य चातुर्विध्यं दर्शितम् ।

तदिति । यथार्थानुभवात्मकप्रमायाः करणमित्यर्थः ।

असाधारणमिति । कालादिवारणाय–'असाधारण'मिति । व्यापारे-

* बालमनोरमा *

निरूपकभावाऽविवक्षायाम् । १ निष्कर्षे तु = 'तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वमिति निष्कर्षे तु ।

* परीक्षा *

**प्रश्नः**—यथार्थानुभवः कतिविधः ?, तत्करणञ्च कतिविधम् ? ।

**उत्तरम्**—यथार्थानुभवश्चतुर्विधः—प्रत्यक्षा-ऽनुमित्यु-पमिति-शाब्दभेदात् । यथार्थानुभवरूपप्रमायाः करणञ्च चतुर्विधं—प्रत्यक्षा-नुमानो-पमान-शब्दभेदात् ।

**प्रश्नः**—प्रमाणसामान्यलक्षणं लिख ।

**उत्तरं**—प्रमाकरणत्वं प्रमाणत्वम् ।

**प्रश्नः**—करणस्य किं लक्षणम् ? किञ्च तत्राऽसाधारणत्वम् ।

**उत्तरं**-व्यापारवत्त्वे सति-असाधारणकारणत्वं करणस्य लक्षणम् । असाधारणत्वञ्च कार्यत्वेतरधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । यथा-कार्यत्वेतरघटत्वादि-

कार्यनियतपूर्ववृत्ति कारणम् ॥

## * न्यायबोधिनी *

पितकारणताशालित्वम्। यथा दण्डादेर्घटादिकं प्रत्यसाधारणकारणत्वम्। कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः, तदवच्छिन्नकार्यता घटे, तन्निरूपिता कारणता दण्डे।—अतो घटं प्रति दण्डः—असाधारणं कारणम्। भ्रम्यादिरूपव्यापारवत्त्वाच्च कारणम्।

साधारणकारणत्वञ्च—कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। ईश्वराऽदृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम्।

कारणं लक्षयति—कार्यनियतेति। कार्यं प्रति नियतत्वे सति, पूर्ववृत्तित्वं—कारणत्वम्। 'नियतत्व' विशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वंस्यादतो 'नियतत्वे सती'ति विशेषणम्।

## * पदकृत्यम् *

ऽतिव्याप्तिवारणाय—'व्यापारव'दित्यपि देयम्। व्यापारश्च—द्रव्यान्यत्वे सति तज्जन्यत्वे सति, तज्जन्यजनकः। ईश्वरेच्छादिवारणाय 'तज्जन्यत्वे सती'ति। कुलालजन्यत्वे सति कुलालजन्यघटजनकत्वं कुलालपुत्रस्याप्यस्त्यतस्तत्रातिव्याप्तिवारणाय प्रथमं सत्यन्तम्। दण्डरूपादिवारणाय 'तज्जन्यजनक' इति।

कार्येति। कार्यात्—नियता=अवश्यं भाविनी—पूर्ववृत्तिः=पूर्वक्षणवृत्तिर्यस्य तत्तथेत्यर्थः। अनियतरासभादिवारणाय—'नियते'ति। कार्यवारणाय—'पूर्वे'ति। दण्डत्वादिवारणायाऽनन्यथासिद्धत्वविशेषणस्यावश्यकत्वेन तत एव रासभादिवारणसम्भवे नियतपदमनर्थकमेव। एवं चाऽनन्यथासिद्धकार्यपूर्ववृत्ति कारणमिति

---

## * परीक्षा *

रूपधर्मावच्छिन्ना कार्यता घटे, तन्निरूपिता कारणता दण्डे। अतो घटं प्रति दण्डः—असाधारणकारणम्। घटाऽसाधारणकारणे दण्डे भ्रमणात्मको व्यापारोऽप्यस्तीति दण्डे करणत्वलक्षणसमन्वयः।

प्रश्नः—कारणस्य किं लक्षणम्?

उत्तरम्—अन्यथासिद्धिशून्यत्वे सति, कार्याऽव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं कारणत्वम्। यत्किञ्चिद्घटव्यक्तिपूर्ववर्तिनो रासभादेर्घटकारणत्वस्य निरासाय—कार्याव्यवहितेत्यादि। दण्डादिगतरूपादेर्घटादिकारणत्वनिरासाय—'अन्यथासिद्धिशून्यत्वे सती'ति विशेषणम्।

कार्यं—प्रागभावप्रतियोगि ।
कारणं त्रिविधं—समवाय्यसमवायिनिमित्तभेदात् ।
यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् ।

### * न्यायबोधिनी *

नयतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतः—'अनन्यथासिद्ध'-पदमपि कारणलक्षणे निवेशनीयम् । एवञ्च न तत्राऽतिव्याप्तिः, दण्डरूपादीनामन्यथासिद्धत्वात् ।

कार्यं लक्षयति—कार्यमिति । प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम् । कार्योत्पत्तेः पूर्वम्—'इह घटो भविष्यती'ति प्रतीतिर्जायते, एतत्प्रतीतिविषयीभूतो योऽभावः स—प्रागभावः, तत्प्रतियोगि घटादिरूपं कार्यम् ।

कारणं विभजते—कारणमिति । समवायिकारणम्, असमवायिकारणं निमित्तकारणं चेति ।

### * पदकृत्यम् *

**फलितम् । अनन्यथासिद्धत्वम्-अन्यथासिद्धिशून्यत्वम् । अन्यथासिद्धिश्च अवश्यक्लृप्तनियतपूर्ववर्त्तिनैव कार्यसम्भवे तत्सहभूतत्वम् । यथा—अवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटरूपकार्यसम्भवे तत्सहभूतत्वं दण्डत्वादौ, तदन्यथासिद्धत्वम् ।**

**प्रागभावेति । कालादिवारणाय—'प्रा'गिति । असम्भववारणाय—'प्रतियोगी'ति ।**

**यदिति । यस्मिन्समवायसम्बन्धेन वर्तमानं सदित्यर्थः । चक्रादिवारणाय 'समवेत'मिदि ।**

---

### * परीक्षा *

प्रश्नः—कार्यस्य किं लक्षणम् ? ।

**उत्तरम्**—प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम् । घटादिकार्योत्पत्तेः प्राक्-कपालादौ 'इह घटो भविष्यती'त्यादिरूपा सर्वजनप्रसिद्धा प्रतीतिर्जायते, तत्प्रतीतिविषयीभूतो योऽभावः स एव प्रागभावः । तादृशप्रागभावप्रतियोगितया च घटादेः कार्यत्वमिति समन्वयः । कालादिनित्यनिरासाय प्रागित्यभावविशेषणम्, अन्यथा घटाद्यन्योन्याभावप्रतियोगितया, गगनाद्यभावप्रतियोगितया च नित्यानां कालादीनामपि कार्यत्वापत्तिः स्यात् ।

प्रश्नः—समवायिकारणस्य किं लक्षणम् ? ।

**उत्तरम्**-समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं

**यथा—तन्तवः पटस्य । पटश्च-स्वगतरूपादेः ।**

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणम्—**

*** न्यायबोधिनी ***

समवायिकारणं लक्षयति-**यत्समवेतमिति** । यस्मिन्समवेतं सत्=समवायेन सम्बद्धं सत्-कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः । उदाहरणम्-**यथा तन्तव इति** । येषु तन्तुषु समवायेन सम्बद्धं सत्पटात्मकं कार्यमुत्पद्यते ते-तन्तवः-समवायिकारणमित्यर्थः । सामान्यलक्षणन्तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति । समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेः तादात्म्यसम्बन्धेनैव सत्त्वात्—समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः ।

समवायेन [1]जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्य-गुण-कर्मसु त्रिषु द्रव्यमेव समवायिकारणम् । द्रव्ये तु द्रव्यावयवाः समवायिकारणम् । [2]अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह-**पटश्च स्वगतरूपादेरिति** । 'समवायिकारण'मित्यनुषज्यते ।

असमवायिकारणं लक्षयति-**कार्येणेति** । असमवायिकारणं द्विविधं, कार्येण

---

*** बालमनोरमा ***

१ **जन्यभावत्वावच्छिन्नं प्रति**=द्रव्यगुणकर्मत्वावच्छिन्नं प्रति । **द्रव्ये**=घटपटादौ । **द्रव्यावयवाः**=घटपटाद्यवयवाः कपालतन्त्वादयः ।

२ **अतः**=जन्यभावत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यस्यैव कारणत्वात् ।

---

*** परीक्षा ***

समवायिकारणत्वम् । यस्मिन् समवायसम्बन्धेन सम्बद्धं सत् कार्यमुत्पद्यते तत्समवायिकारणमिति यावत् । यथा तन्तवः पटस्य समवायिकारणम्, तत्र हि-तन्तुषु समवायसम्बन्धेन सम्बद्धं पटात्मकं कार्यमुत्पद्यते, अतः पटस्य तन्तवः समवायिकारणम् । किञ्च घटस्य समवायिकारणं कपालं, तत्र हि समवायेन घटाधिकरणे कपाले कपालस्य तादात्म्येन सत्त्वाल्लक्षणसमन्वयः । एवं पटगतरूपादौ पटस्य समवायिकारणत्वं बोध्यम् ।

सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तत्–असमवायिकारणमित्येकम् । कारणेन सहैकस्मिन्नर्थे समवेतं सत् यत्-कारणं तदपरम्-असमवायिकारणमित्यर्थः । अत्र 'कारणेने'त्यस्य–[1]स्वकार्यसमवायिकारणेनेत्यर्थः । [2]जन्यद्रव्यमात्रं प्रति अवयवसंयोगस्यैवाऽसमवायिकारणत्वात्पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवाऽसमवायिकारणत्वमिति दर्शयन् प्रथममुदाहरति–यथा तन्तुसंयोगः पटस्येति । यथा पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवेतं सत्-समवायसम्बन्धेन वर्तमानं सत्–[3]पटात्मककार्यम्प्रति तन्तुसंयोगात्मकं कारणम्–असमवायिकारणं भवतीत्यर्थः ।

## * पदकृत्यम् *

**कार्येणेति । कार्येण कारणेन वा सहैकस्मिन्नर्थे समतवेत्वे सति आत्मविशेषगुणभिन्नत्वे सति यत्कारणं तत्–असमवायिकारणम् । तन्तुसंयोगादावव्याप्तिवारणाय–कार्येणेति । तन्तुरूपादावव्याप्तिवारणाय–कारणेनेति । आत्मविशेषगुणेऽतिव्याप्तिवारणाय–'आत्मविशेषगुणभिन्नत्वे सती'ति । विशेषवारणाय'कारण'मिति ।**

---

## * बालमनोरमा *

**१ स्वकार्यसमवायिकारणेति । स्वम्=असमवायिकारणतयाऽभिप्रेतं तन्तुरूपम्, तत्कार्यं—पटरूपम्, तत्समवायिकारणं–पटः, तेन सहेत्यर्थः ।**

**२ कार्यैकार्थप्रत्यासत्तिं सङ्गमयति—जन्येति ।**

**३ अत्र हि—'यथा पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवायसम्बन्धेन विद्यमानत्वे सति कारणत्वात्पटात्मककार्यं प्रति तन्तुसंयोगोऽसमवायिकारणमित्यर्थः' इति पाठान्तरम् ।**

---

## * परीक्षा *

**प्रश्नः**—असमवायिकारणस्य किं लक्षणम् ?, किञ्च तदुदाहरणम् ? ।

**उत्तरम्**—कार्येण स्वकार्यसमवायिकारणेन वा सह एकस्मिन्नर्थे समवेतत्वे सति कारणत्वम्–असमवायिकारणत्वम् । तन्तुसंयोगकपालसंयोगादावव्याप्तिवारणाय-कार्येणेति । तन्तुरूपादावव्याप्तिनिरासाय–कारणेनेति । ज्ञानादिरूपे आत्मविशेषगुणादावतिव्याप्तिवारणाय तद्भिन्नत्वोपादानम् । विशेषेऽतिव्याप्तिवारणाय—कारणत्वांशोपादानम् ।

* न्यायबोधिनी *

द्वितीयमसमवायिकारणं 'कारणेन सहे' त्यादिना पूर्वोक्तं, तदुदाहरति-तन्तुरूपमिति। कारणेन सह-पटरूपसमवायिकारणीभूत[1]पटेन सह[2], एकस्मिन्नर्थे-तन्तुरूपेऽर्थे, [3]समवेतं सत्-समवायसम्बन्धेन वर्तमानं सत्-तन्तुरूपं,-पटगतरूपं प्रति कारणं भवति, अतोऽसमवायिकारणं-तन्तुरूपं पटगतरूपस्य।

[4]सामान्यलक्षणं तु-'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या 'समवाय'-'स्वसमवायिसमवेतत्वा'ऽन्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वम्-'असमवायिकारणत्व'मिति। [5]द्रव्याऽसमवायिकारणीभूतावयवसंयोगादौ तु समवाय-

---

* बालमनोरमा *

१ असमवायिकारणत्वेनाभिमतं यत्-तन्तुरूपं, तत्कार्यीभूतं यत्पटरूपं, तत्समवायिकारणीभूतेन पटेनेत्यर्थः।

२ अयमाशयः-समवायसम्बन्धेन यत्र कार्यं तिष्ठति तत्र समवायसम्बन्धेन वर्त्तमानत्वमसमवायिकारणत्वमेकम्। यथा-घटरूपं कार्यं समवायसम्बन्धेन कपालद्वये तिष्ठति, तत्रैव च समवायसम्बन्धेन कपालद्वयसंयोगोऽपि तिष्ठतीति घटं प्रति कपालद्वयसंयोगोऽसमवायिकारणम्। इदञ्च 'कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारण'-मित्युच्यते। एवं समवायसम्बन्धेन यत्र कार्यं वर्त्तते तत्र 'स्वसमवायिसमवेतत्व'-सम्बन्धेन वर्त्तमानं कारणमपि असमवायिकारणम्। यथा पटे पटरूपात्मकं कार्यं समवायेन वर्त्तते, तत्र स्वसमवायिसमवेतत्वसम्बन्धेन (स्वं=तन्तुरूपं, तत्समवायिनः=तन्तवः, तत्र-समवेतः पटः-इति रीत्या) तन्तुरूपमपि वर्त्तते इति-पटगतरूपं प्रति कारणैकार्थप्रत्यासत्त्या तन्तुरूपमसमवायिकारणमिति।

३ अत्र न्यायबोधिन्यां-'समवेतत्वे सति कारणत्वात्तन्तुरूपं पटगतरूपस्याऽसमवायिकारणमित्यर्थः' इति पाठान्तरम्।

४ सामान्यलक्षणन्तु=असमवायिकारणसामान्यलक्षणन्तु।

५ सामान्यलक्षणं सङ्गमयति-द्रव्येति। घटादिरूपद्रव्येत्यर्थः।

अवयवसंयोगादौ=कपालद्वयसंयोगादौ।

---

* परीक्षा *

तत्र-तन्तुसंयोगस्य कार्येण पटेन सह एकस्मिन्नर्थे तन्तुरूपे समवेतत्वात्-पटं प्रत्यसमवायिकारणत्वम्। तन्तुरूपस्य च स्वकार्यसमवायिकारणेन पटेन सह स्वसमवायिसमवेतत्वसम्बन्धेन एकस्मिन्नर्थे तन्तुरूपे वर्त्तमानतया-पटरूपं प्रत्यसमवायिकारणत्वमिति विवेकः।

तदुभयभिन्नं कारणं—निमित्तकारणम् ।

* न्यायबोधिनी *

सम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवाय[1]सम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते ।

एवम्—[2]आद्यपतनक्रियायामाद्यस्यन्दनक्रियायाञ्च गुरुत्वद्रवत्वे असमवायिकारणे भवतः, आद्यपतनक्रियां प्रति आद्यस्यन्दनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात् । [3]अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्वसम्बन्धेनैव कारणत्वात्, तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वतते । [4]अवयवगुणीभूत-कपालन्तुरूपादेः; स्वशब्दग्राह्य-कपालरूपतन्तुरूपादि-समवायि-कपालतन्तु—समवेतत्वसम्बन्धेन घटपटादौ सत्त्वात् ।

निमित्तकारणं लक्षयति—**तदुभयभिन्नमिति** । समवाय्यसमवायिकारण-

* पदकृत्यम् *

तदुभयभिन्नं कारणं निमित्तकारणमिति । समवाय्यसमवायिकारण-

---

* बालमनोरमा *

१ येन सम्बन्धेन कार्यं तिष्ठति स सम्बन्धः—कार्यतावच्छेदकः ।

येन सम्बन्धेन कारणं तिष्ठति स सम्बन्धः—कारणतावच्छेदकः । प्रकृते च कार्यतावच्छेदकः सम्बन्धः—समवाय एव । कारणतावच्छेदकः सम्बन्धस्तु—समवायः, स्वसमवायिसमवेतत्वञ्चेति द्वयमिति तत्त्वम् ।

२ आद्यपतनक्रियायां गुरुत्वस्य, आद्यस्यन्दनक्रियायां द्रवत्वस्य चाऽसमवायिकारणत्वमित्यर्थः ।

३ अवयविगुणादौ=घटपटाद्यवयविरूपादौ । अवयवगुणादेः=कपालरूपतन्तुरूपादेः ।

४ 'अवयविगुणभूतघटपटरूपादौ त्ववयवगुणीभूतकपालतन्तुरूपादेः स्वपदग्राह्यकपालतन्तुरूपादिसमवायिकपालतन्त्वादिसमवेतत्वसम्बन्धेनैव कारणत्वात्तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणीभूतकपालरूपतन्तुरूपादौ वर्त्तते' इत्येवं वैपरीत्येन अत्र क्वचित्पाठान्तरम् ।

---

* परीक्षा *

प्रश्नः—निमित्तकारणस्य किं लक्षणं ? । किञ्चोदाहरणम् ? ।

उत्तरम्—समवायिकारणभिन्नत्वे सति,असमवायिकारणभिन्नत्वे च सति, कारणत्वं

**यथा तुरीवेमादिकं पटस्य ।**

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ।**

*** न्यायबोधिनी ***

भिन्नत्वे सति, असमवायिकारणभिन्नत्वे सति कारणत्व निमित्तकारणस्य लक्षणमित्यर्थः ।

**तदेतदिति । यदसाधारणमिति ।** 'व्यापारवत्त्वे सती'त्यपि पूरणीयम् । अन्यथा तन्तु-कपालसंयोगयोरतिव्याप्तिः; तन्तु-कपालसंयोगयोरपि कार्यत्वातिरिक्त-पटत्व-घटत्वावच्छिन्नम्प्रति कारणत्वादसाधारणत्वमस्त्येवेत्यतस्तत्र कारणत्ववारणाय 'व्यापारवत्त्वे सती'ति करणलक्षणे विशेषणं देयम् । व्यापारत्वं च तज्जन्यत्वे सति, तज्जन्यजनकत्वम् । भवति हि-दण्डजन्यत्वे सति दण्डजन्य-घट-जनकत्वा-द्भ्रम्यादेर्दण्डव्यापारत्वम् । एवं कपालसंयोग-तन्तुसंयोगादेरपि कपाल-तन्तुव्यापारत्वं, कपाल-तन्तुजन्यत्वे सति कपाल-तन्तु-जन्य-घट-पट-जनकत्वात् । करणलक्षणेऽसाधारणत्वविशेषणानुपादाने ईश्वराऽदृष्टादेरपि व्यापारवत्कारणत्वं स्यात्, अतस्तत्राऽतिव्याप्तिवारणाय-'असाधारणे'ति विशेषणम् ।

*** पदकृत्यम् ***

**वारणाय 'तदुभयभिन्न' मिति । विशेषादावतिव्याप्तिवारणाय-'कारण'मिति ।**

**तदेतदिति । यस्मात्कारणात्करणत्वघटकं कारणमुपदर्शितं तस्मात्-एतत्त्रिविधसाधकमध्ये यत्साधकतमं तदेव करणमिति भावः ।**

**॥ इति करणप्रपञ्चः ॥**

---

*** परीक्षा ***

निमित्तकारणत्वम् । यथा तुरीवेमादिकं पटस्य, दण्डादिकञ्च घटस्य निमित्तकारणम्, समवाय्यसमवायिकारणभिन्नत्वे सति कारणत्वात्

**प्रश्नः**--करणस्य किं लक्षणम् ? किञ्चोदाहरणम् ? ।

**उत्तरम्**-व्यापारवत्त्वे सति असाधारणकारणत्वं करणत्वम् । व्यापारवत्त्वञ्च तज्जन्यत्वे सति तज्जन्यजनकत्वम् । भवति च दण्डजन्यतया, दण्डजन्यघटजनकतया, चक्रभ्रमिरूपव्यापारवत्तया च दण्डस्याऽसाधारणकारणत्वात्करणत्वम् ।

तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ।
[ ज्ञानाऽकरणकं ज्ञानं प्रत्यक्षम् ]

* न्यायबोधिनी *

षड्विधेन्द्रियभूत-प्रत्यक्षप्रमाणस्य लक्षणमाह-तत्रेति । तत्र=प्रमाणभूतेषु प्रत्यक्षादिषु, प्रत्यक्षात्मकं यज्ज्ञानं-चाक्षुषादिप्रत्यक्षं, तत्प्रति व्यापारवदसाधारणं कारणमिन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् । [1]आद्यसन्निकर्षातिरिक्तचतुर्विधसन्निकर्षाणां समवायरूपत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं[2] न सम्भवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या । मानसप्रत्यक्षे त्वात्ममनःसंयोगस्यैव [3]सा बोध्या ।

[ प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—ज्ञानाऽकरणकमिति । क्षेपकं लक्षणमिदम्[4] । ज्ञानं—व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानं च करणं येषां

* पदकृत्यम् *

तत्रेति । तत्र = प्रमाणचतुष्टयमध्ये । दण्डादिवारणाय 'ज्ञाने'ति । अनुमानादिवारणाय-'प्रत्यक्षे'ति ॥

* बालमनोरमा *

१ आद्यः सन्निकर्षः—संयोगरूपः । तदतिरिक्ताः—संयुक्तसमवायादयः ।

२ समवायसम्बन्धस्य नित्यत्वेन जन्यत्वाऽभावात् । व्यापारत्वस्य च तज्जन्यत्वे सति, तज्जन्यजनकत्वरूपत्वात्, समवायेन व्यापारत्वसम्भवः । ३ सा=व्यापारता ।

४ इदम्=ईश्वरप्रमासाधारणं लक्षणम् । क्षेपकं=न सर्वेषु तर्कसंग्रहपुस्तकेषु

* परीक्षा *

प्रश्नः—प्रत्यक्षप्रमाणस्य ( चक्षुरादिषड्विधेन्द्रियाणां ) किं लक्षणम् ? ।

उत्तरम्—चाक्षुषादिप्रत्यक्षज्ञानकरणत्वं प्रत्यक्षप्रमाणत्वम् । करणत्वञ्च-व्यापारवत्त्वे सति,असाधारणकारणत्वम् । एवञ्च चाक्षुष-श्रावण-रासनादिषड्विधप्रत्यक्षज्ञानं प्रति चक्षुरादीनामिन्द्रियाणां सन्निकर्षादिरूपव्यापारवत्त्वादसाधारणकारणत्वाच्च करणतया तत्र चक्षुरादौ लक्षणसमन्वयः । तथा च चाक्षुषप्रत्यक्षज्ञानकरणतया चक्षुरिन्द्रियं 'प्रत्यक्ष' मित्युच्यते । एवं रसनेन्द्रियादिकमिति तत्त्वम् ।

प्रश्नः—प्रत्यक्षप्रमायाः किं लक्षणम् ? ।

उत्तरम्—व्याप्त्यादिज्ञानकरणकाऽनुमित्युपमित्यादिज्ञानभिन्नत्वे सति, ज्ञानत्वं प्रत्यक्षप्रमाया लक्षणम् । तच्च 'अयं घट' इति प्रत्यक्षज्ञाने सुलभम्, तादृशज्ञानस्येन्द्रियकरणकत्वादतो भवति तत्र लक्षणसमन्वयः ।

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद् द्विविधम्। निर्विकल्पकं, सविकल्पकं चेति।

तत्र—निष्प्रकारकं ज्ञानं निर्विकल्पकम्।

*** न्यायबोधिनी ***

ते-ज्ञानकरणकाः—अनुमित्युपमितिशाब्दाः। ज्ञानकरणकं न भवतीति-ज्ञानाऽकरणकम्। तत्त्वं प्रत्यक्षलक्षणम्।

इदं [1]लक्षणमीश्वरप्रत्यक्षसाधारणम्। ईश्वरप्रत्यक्षस्याऽजन्यत्वात्, जन्यप्रत्यक्षे च इन्द्रियाणामेव करणत्वं न तु ज्ञानस्येति—तयोरुभयोः संग्रहः।

इन्द्रियार्थसन्निकर्षेति। 'जन्यप्रत्यक्षस्यैव लक्ष्यत्व' मित्यभिप्रायेणेदं लक्षणम्। प्रत्यक्षं विभजते—निर्विकल्पकमिति।

तल्लक्षयति—तत्र निष्प्रकारकमिति। प्रकारताशून्यज्ञानत्वमेव निर्वि-

*** पदकृत्यम् ***

इन्द्रियार्थेति। इन्द्रियं=चक्षुरादिकम्, अर्थः=घटादिः; तयोः सन्निकर्षः=संयोगादिस्तज्जन्यं ज्ञानं प्रत्यक्षमित्यर्थः। संनिकर्षध्वंसवारणाय 'ज्ञान'मिति। अनुमित्यादिवारणाय—'इन्द्रियार्थसंनिकर्षे'ति। ननु सोपनेत्रचक्षुषा[2] कथं पदार्थग्रहणं, चक्षुष उपनेत्रनिरुद्धत्वेन पदार्थेन सह संनिकर्षाभावात्, कथं वा स्वच्छजाह्नवीसलिलावृतमत्स्यादेश्चक्षुषा ग्रहणमिति चेन्न, स्वच्छद्रव्यस्य तेजोनिरोधकत्वाऽभावेन तदन्तश्चक्षुः प्रवेशसम्भवात्। न चेश्वरप्रत्यक्षेऽव्याप्तिरिति वाच्यम्, अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात्।

तत्र निष्प्रकारकमिति। सविकल्पकेऽतिव्याप्तिवारणाय 'निष्प्रकारक'मिति।

*** बालमनोरमा ***

उपलभ्यते। एवञ्च असार्वत्रिकत्वान्नेदं प्रामाणिकमित्याशयः।

१ इदं='ज्ञानाऽकरणकं ज्ञानं प्रत्यक्ष'मिति। २ उपनेत्रं='चशमा' इति भाषा।

*** परीक्षा ***

प्रश्नः—जन्यप्रत्यक्षप्रमायाः किं लक्षणम्?।

उत्तरम्—इन्द्रियार्थसन्निकर्षजन्यत्वे सति (इन्द्रियाणां-चक्षुरादीनाम्, अर्थानां=विषयाणां घटादीनाञ्च यः सनिकर्षः—संयोगादिरूपः—तज्जन्यत्वे सति) ज्ञानत्वं प्रत्यक्षप्रमात्वम्। संनिकर्षध्वंसेऽतिव्याप्तिवारणाय 'ज्ञानत्व'मिति विशेष्यम्, अनुमित्यादिप्रमायामतिव्याप्तिवारणाय—इन्द्रियार्थेत्यादिविशेषणदलम्।

प्रश्नः—प्रत्यक्षज्ञानं कतिविधम्?।

उत्तरम्—प्रत्यक्षज्ञानं द्विविधं—निर्विकल्पकं, सविकल्पकञ्च।

सप्रकारकं ज्ञानं सविकल्पकम् । यथा 'डित्थोऽयं' 'ब्राह्मणोऽयं' 'श्यामोऽय'मिति ।

*** न्यायबोधिनी ***

कल्पकत्वमित्यर्थः। निर्विकल्पके चतुर्थी विषयता स्वीक्रियते, न तु त्रिविधविषयता[1]-मध्ये कापि तत्रास्ति । अतो 'विशेष्यताशून्यज्ञानत्वं' 'संसर्गताशून्यज्ञानत्व'मित्यपि [2]लक्षणं सम्भवति ।

सविकल्पकं लक्षयति—**सप्रकारकमिति** । विषयताया ज्ञाननिरूपितत्वा[3]-ज्ज्ञानस्य विषयतानिरूपकत्वेन—प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम् । एवं 'विशेष्यतानिरूपकज्ञानत्वं' 'संसर्गतानिरूपकज्ञानत्व'मित्यपि लक्षणं सम्भवति ।

उदाहरणम्—**यथेति** । इदन्त्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारता-शालिज्ञानं, ब्राह्मणत्वप्रकारताशालिज्ञानं च ( श्यामत्वप्रकारताशालिज्ञानञ्च ) सविकल्पकमित्यर्थः ।

*** पदकृत्यम् ***

प्रकारवारणाय 'ज्ञान'मिति ।

सप्रकारकमिति । घटादिवारणाय—'ज्ञान'मिति । निर्विकल्पकवारणाय 'सप्रकारक'मिति ।

---

*** बालमनोरमा ***

१ विशेष्यता–प्रकारता–संसर्गताख्यत्रिविधविषयतेत्यर्थः ।

२ लक्षणं=निर्विकल्पकलक्षणम् ।

३ यतो विषयता सविकल्पकज्ञाननिरूपिता भवति, अतो ज्ञानं विषयता-निरूपकं भवति । एवञ्च विषयतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणं निष्पन्नम् । विषयता च प्रकारताख्या, विशेष्यताख्या, संसर्गताख्या च । तदाह–एवमिति ।

---

*** परीक्षा ***

प्रश्नः—निर्विकल्पकज्ञानस्य किं लक्षणम् ?

उत्तरम्–प्रकारताशून्यज्ञानत्वं निर्विकल्पकत्वम् । एवं 'विशेष्यताशून्यज्ञानत्वं' 'संसर्गताशून्यज्ञानत्व' मित्यपि निर्विकल्पकलक्षणं बोध्यम् ।

प्रश्नः—सविकल्पकस्य किं लक्षणम् ? । किञ्च तदुदाहरणम् ? ।

उत्तरम्—प्रकारताविशेष्यतादिनिरूपकत्वे सति ज्ञानत्वं सविकल्पकत्वम् ।

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः। संयोगः[१], संयुक्तसमवायः[२], संयुक्तसमवेतसमवायः[३], समवायः[४], समवेतसमवायो[५], विशेषणविशेष्यभावश्चेति[६] ॥**

*** न्यायबोधिनी ***

चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान्विभजते—**संयोग इत्यादिना**। [१]द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नम्प्रति चक्षुःसंयोगः कारणम्। [२]द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नम्प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम्। [३]द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम्। द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि घ्राण-रसन-श्रवणानि गुणग्राहकाणि। [४]अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचप्रत्यक्षत्वावच्छिन्नम्प्रति त्वक्संयुक्तसमवायस्य हेतुता। द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादि-

*** पदकृत्यम् ***

**प्रत्यक्षेति। तच्च प्रत्यक्षं षड्विधं, घ्राणज-रासन-चाक्षुष-श्रौत्र-त्वाच-मानसभेदात्। ननु प्रत्यक्षकारणीभूतेन्द्रियनिष्ठप्रत्यक्षसामानाधिकरण्यघटकः संनिकर्षः कः? इत्यपेक्षायां तं विभज्य दर्शयति-प्रत्यक्षेति। लौकिकप्रत्यक्षेत्यर्थः।**

---

*** बालमनोरमा ***

**१ घटपटादिद्रव्येत्यर्थः।**

**२ घटपटादिद्रव्यसमवेतरूपादिवृत्तीत्यर्थः।**

**३ द्रव्यसमवेतरूपादिसमवेतरूपत्वादिवृत्तीत्यर्थः।**

**४ द्रव्यग्राहकेषु त्रिष्विन्द्रियेषु-चक्षुरिन्द्रियसन्निकर्षानुक्त्वाऽवशिष्टयोर्द्वयोरिन्द्रिययोरपि सन्निकर्षानाह—अत इति।**

---

*** परीक्षा ***

घटादावतिव्याप्तिवारणाय ज्ञानत्वमिति विशेष्यदलम्। निर्विकल्पकेऽतिव्याप्तिवारणाय सत्यन्तम्। यथा 'डित्थोऽयं' 'ब्राह्मणोऽयं' 'श्यामोऽयं'मित्यादिज्ञानम्, इदन्त्वावच्छिन्नविशेष्यतानिरूपित-डित्थत्व-ब्राह्मणत्व-श्यामत्वादिप्रकारताशालितया सविकल्पकमित्युच्यते।

(१) **प्रश्नः**—सन्निकर्षः कतिविधः?।

**उत्तरम्**—घटादिप्रत्यक्षज्ञानहेतुः इन्द्रियार्थसंनिकर्षः षड्विधः, [१]संयोग-संयुक्त-

चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ।

घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः । चक्षुःसंयुक्ते घटे रूपस्य समवायात् ।

रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः । चक्षुः-संयुक्ते घटे रूपं समवेतं, तत्र रूपत्वस्य समवायात् ।

*** न्यायबोधिनी ***

जातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता । एवमात्म-मानसप्रत्यक्षे मनःसंयोगस्य हेतुता । आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसम-वायस्य हेतुता । रसन-घ्राणयोस्तु रस-गन्ध-तद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव तत्र हेतुता वाच्या ।

श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण च समं शब्दस्य समवायः संनिकर्षः ।

शब्दवृत्ति-शब्दत्व-कत्व-खत्वादिजातिविषयकश्रवणप्रत्यक्षे समवेतसमवायस्य हेतुता ।

*** पदकृत्यम् ***

संयोगमुदाहरति—चक्षुषेति । तथा च द्रव्यचाक्षुषत्वाचमानसेषु संयोग एव संनिकर्ष इति भावः ।

घटरूपेति । 'चक्षुषा' इत्यनुषज्यते । तथा च द्रव्यसमवेत–चाक्षुष-त्वाच-मानस–रासन–घ्राणजेषु संयुक्तसमवाय एव संनिकर्ष इत्यर्थः ।

रूपत्वेति । रूपत्वात्मकं यत्सामान्यं तत्प्रत्यक्षे इत्यर्थः । अत्रापि 'चक्षुषा' इत्यनुषज्यते । तथा च द्रव्यसमवेतसमवेतचाक्षुष–रासन–घ्राणज–स्पार्शन-मानसेषु संयुक्तसमवेतसमवाय एव संनिकर्ष इति भावः । अथ द्रव्य-तत्सम-वेतप्रत्यक्षेऽपि संयुक्तसमवेतसमवाय एव संनिकर्षोऽस्त्विति चेन्नैतत्; ईश्वरात्मादेः ( आत्मसुखादेः ) अनध्यक्षत्वप्रसङ्गात् ।

---

*** परीक्षा ***

[2]समवाय-संयुक्तसमवेतसमवाय[3]–समवाय[4]–समवेतसमवाय[5]– विशेषणविशेष्य–भाव[6]-भेदात् ।

तत्र–चक्षुषा घटप्रत्यक्षजनने संयोगः[1] संनिकर्षः। घटादिगतरूपादिप्रत्यक्षेच चक्षुः-संयुक्तसमवायः[2] संनिकर्षः, चक्षुःसंयुक्तघटादौ रूपादीनां गुणानां समवायसम्बन्धेन वर्त्तमानत्वात् । एवं घटादिरूपगतरूपत्वजातिप्रत्यक्षे चक्षुःसंयुक्तसमवेतसमवायः[3]

श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवर्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात्, गुणगुणिनोश्च समवायात्।

शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।

अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः 'घटाऽभाव-

### * न्यायबोधिनी *

अभावप्रत्यक्षे विशेषण-विशेष्यभावो नाम विशेषणतासंनिकर्षः। पञ्चविध-सन्निकर्षोपरि विशेषणता योजनीया। तथा हि—द्रव्याधिकरणकाऽभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता। द्रव्यसमवेताधिकरणकाऽभावप्रत्यक्षे इन्द्रियसंयुक्त-समवेतविशेषणता। द्रव्यसमवेतसमवेताऽधिकरणकाभावप्रत्यक्षे-इन्द्रियसंयुक्तसम-वेतसमवेतविशेषणता। 'संयोग'स्थाने 'संयुक्त'पदं घटयित्वा 'समवाय'स्थाने 'समवेत'पदं च घटयित्वा अभावप्रत्यक्षस्थले निर्वाह्यम्। तथा घटद्रव्यसमवेतं घटत्वं, पृथ्वीत्वादिकं रूपादिकं च। तत्र नीलादौ

### * पदकृत्यम् *

समवायसंनिकर्षमुदाहरति—श्रोत्रेणेति। 'जननीये' इति शेषः। ननु श्रोत्र-शब्दयोः कथं समवाय इत्यपेक्षमाणं प्रति तमुपपाद्य दर्शयति—कर्णेति। अथ समवायस्य नित्यत्वेन शब्दप्रत्यक्षे को व्यापार इति चेत्, शब्दः, श्रोत्रमनः-संयोगो वेति गृहाण। शब्दत्वेति। 'श्रोत्रेण जननीये' इत्यनुकर्षशेषौ।

विशेषणेति। विशेषणभावो, विशेष्यभावश्चेति बोध्यम्। इन्द्रियसम्बद्धविशे-षणत्वम्, इन्द्रियसम्बद्धविशेष्यत्वमिति यावत्। विशेषणभावसंनिकर्षमुपपाद्य

---

### * परीक्षा *

सन्निकर्षः, चक्षुःसंयुक्ते घटादौ समवायसम्बन्धेन वर्त्तमाने रूपादौ रूपत्वजातेः सम-वायसम्बन्धेन वर्त्तमानत्वात्। श्रोत्रेण शब्दसाक्षात्कारे समवायः[४] संनिकर्षः, कर्ण-विवरवर्त्याकाशस्यैव श्रोत्रेन्द्रियतया तद्ग्राह्यस्य शब्दस्य च आकाशगुणतया गुण-गुणिनोः समवायात्। शब्दत्वसाक्षात्कारे च श्रोत्रेन्द्रियसमवेतसमवायः[५] संनिकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायसम्बन्धेन वर्त्तमानत्वात्। अभावप्रत्यक्षे च यथायथं विशेषणविशेष्यभावः[६] संनिकर्षः। तत्र-'घटाभाववद्भूतल'मित्यत्र चक्षुःसंयुक्ते

वद्भूतल'मित्यत्र चक्षुःसंयुक्ते भूतले घटाऽभावस्य विशेषणत्वात्।

एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्। तत्करणमिन्द्रियम्। तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।

### * न्यायबोधिनी *

पीतत्वाभावः घटत्वादिजातौ पटत्वाभावश्च वर्त्तते। स चाऽभावः संयुक्तसमवेतविशेषणतासंनिकर्षेण गृह्यते। एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रियसंयुक्तसमवेतसमवेतविशेषणतासंनिकर्षेण गृह्यते। घटसमवेतं=नीलं, तत्समवेतं–नीलत्वं, तद्विशेषणता–पीतत्वाऽभावे वर्तते इति सङ्क्षेपः।

॥ इति प्रत्यक्षपरिच्छेदः ॥

---

### * पदकृत्यम् *

दर्शयति–घटाभाववदिति। 'इह भूतले घटो नास्ती'त्यादौ विशेष्यतासंनिकर्षोऽवसेयः। सप्तम्यन्तस्य [1]विशेषणत्वात्।

प्रत्यक्षप्रमाणमुपसंहरति–एवमिति। उपदर्शितक्रमेणेत्यर्थः। ननु सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसंनिकर्षः किं न स्यादिति चेन्नेत्याह-तत्करणमिति। प्रत्यक्षप्रमाणं [2]निगमयति–तस्मादिति। प्रत्यक्षप्रमाकरणत्वादित्यर्थः। सिद्धमिति। न्यायसिद्धान्ते सिद्धमित्यर्थः।

॥ इति पदकृत्यके प्रत्यक्षपरिच्छेदः ॥

---

### * बालमनोरमा *

१ 'अभावस्य च विशेष्यत्वा'दिति शेषः।

२ उपसंहरति निर्धारयति वा।

॥ इति बालमनोरमायां प्रत्यक्षखण्डम् ॥

---

### * परीक्षा *

भूतले घटाभावस्य विशेषणत्वात् विशेषणत्वं सन्निकर्षः। 'भूतले घटो नास्ती'त्यत्र चाऽभावस्य विशेष्यत्वमिति विशेष्यत्वं संनिकर्षः। 'विशेषणविशेष्यभाव'इत्यस्य विशेष्यत्वं विशेषणत्वं च यथायथमभावप्रत्यक्षे सन्निकर्षद्वयमित्येवार्थः।

* इति श्रीगुरुप्रसादशास्त्रिविरचितायां तर्कसंग्रहपरीक्षायां प्रत्यक्षखण्डम् *

# अथ अनुमानखण्डम् ।

## अनुमितिकरणमनुमानम् ।

### * न्यायबोधिनी *

अनुमानं लक्षयति—अनुमितीति । अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः, अनुमितिः-फलम्=कार्यमित्यर्थः । परामर्शस्य व्याप्तिज्ञानजन्यत्वाद्व्याप्तिज्ञानजन्यानुमितिजनकत्वात् तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम् । अनुमितिकरणत्वमनुमानस्य लक्षणम् । **अनुमानं** = व्याप्तिज्ञानम् । [1]एतस्य परामर्शरूपव्यापारद्वारा[2] अनुमितिं[3] प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम्[4] ।

### * पदकृत्यम् *

प्रत्यक्षानुमानयोः [5]कार्यकारणभावसङ्गतिमभिप्रेत्य प्रत्यक्षानन्तरमनुमानं निरूपयति—अनुमितीति । अनुमितेः करणमनुमानमित्यर्थः । तच्च [6] लिङ्गपरामर्श एवेति निवेदयिष्यते । कुठारादावतिव्याप्तिवारणाय—अनुमितीति । प्रत्यक्षादावतिव्याप्तिवारणाय-अन्विति ।

---

### * बालमनोरमा *

१ एतस्य=व्याप्तिज्ञानस्य ।

२ परामर्शरूपव्यापारद्वारा='वह्निव्याप्यधूमवानयं पर्वत' इत्याद्याकारकपरामर्शरूपव्यापारद्वारा ।

३ अनुमितिं प्रति—'पर्वतो वह्निमा' नित्याद्यनुमितिं प्रति ।

४ उपपन्नमिति । व्यापारस्य तज्जन्यत्वे सति तज्जन्यजनकत्वरूपत्वात् । व्यापारवदसाधारणकारणस्यैव च करणत्वादिति भावः ।

५ प्रत्यक्षानन्तरमनुमानस्य निरूपणे सङ्गतिं प्रदर्शयति—कार्यकारणभावेति । प्रत्यक्षस्य कार्यमेव हि अनुमानम् ।

६ तच्च = अनुमानञ्च । एतेन—'व्याप्तिज्ञानमनुमान'मिति मतस्य निरासः

---

### * परीक्षा *

१ प्रश्नः—अनुमानस्य ( व्याप्तिज्ञानस्य ) किं लक्षणम् ? ।

उत्तरम्—अनुमितिकरणत्वम्-अनुमानस्य लक्षणम् । अनुमानञ्च व्याप्तिज्ञानमेव । व्याप्तिज्ञानञ्च परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणमिति तस्यानुमितिकरणतया तत्र लक्षणसमन्वयः । केचित्तु लिङ्गपरामर्श एव अनुमितिकरणमित्याहुः ।

१ प्रश्नः—अनुमितेः किं लक्षणम् ? ।

उत्तरम्—परामर्शजन्यत्वे सति, ज्ञानत्वमनुमितिलक्षणम् । प्रत्यक्षादावति-

परामर्शजन्यं ज्ञानमनुमितिः।
व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः।

* न्यायबोधिनी *

परामर्शजन्यमिति। परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम्। अत्र 'ज्ञानत्व'मात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय 'परामर्शजन्यत्वे सती'ति विशेषणोपादानम्। परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय 'ज्ञानत्वो' पादानम्।

अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे—व्याप्तिविशिष्टेति। व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानञ्चेति कर्मधारये—'विशिष्ट'पदस्य प्रकारतानिरूपकत्वात्, 'पक्षधर्मताज्ञान'मित्यत्र षष्ठ्या विषयत्वबोधनात्, 'धर्मता'पदस्य सम्बन्धार्थकत्वाच्च, कर्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्गलाभेन च,—व्याप्तिप्रकारकाऽभिन्नं यत्पक्षसम्बन्धविषयकं ज्ञानं तत्परामर्श इति लभ्यते। एवं सति- 'धूमो वह्निव्याप्यः' 'आलोकवान्पर्वतः' इत्याकारकसमूहालम्बने परामर्शलक्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय-पक्षनिष्ठविशेष्यतानिरूपिता या हेतुनिष्ठा

* पदकृत्यम् *

नन्वनुमितेरेव दुर्निरूपत्वात्तद्घटितानुमानमपि दुर्निरूपमित्यत आह—परामर्शेति। प्रत्यक्षादावतिव्याप्तिवारणाय 'परामर्शजन्य'मिति। परामर्शध्वंसवारणाय 'ज्ञान'मिति। परामर्शप्रत्यक्ष[1]वारणाय 'हेत्वविषयक'मित्यपि बोध्यम्।

व्याप्तिविशिष्टेति। विषयितासंबन्धेन व्याप्तिविशिष्टपक्षधर्मताज्ञानं परा-

* बालमनोरमा *

सूचितः। अत्र हि—'अनुमानं व्याप्तिज्ञान'मिति न्यायबोधिन्युक्तं नव्यसिद्धान्तः। लिङ्गपरामर्श एवानुमितिकरणमिति तु प्राचां सिद्धान्त इत्यवधेयम्। एवञ्च न न्यायबोधिनीपदकृत्ययोर्विरोधः। प्रतियोग्यसमानाधिकरणहेतुसमानाधिकारणात्यन्ताभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यञ्च हेतुनिष्ठं व्याप्तिः।

१ परामर्शप्रत्यक्षेति। परामर्शप्रत्यक्षेऽतिव्याप्तिवारणायेत्यर्थः। 'वह्निव्याप्य-

* परीक्षा *

व्याप्तिवारणाय सत्यन्तम्। परामर्शध्वंसस्यापि परामर्शजन्यतया तत्रातिव्याप्तिवारणाय ज्ञानत्वोपादानम्। 'वह्निव्याप्यधूमवानयं पर्वतः' इत्याकारकपरामर्शजन्यत्वस्य, 'पर्वतो वह्निमा'नित्यनुमितौ सत्त्वात्तत्र लक्षणसमन्वयः।

प्रश्नः—परामर्शस्य किं लक्षणम्?। किञ्च तदुदाहरणम्?।

* बालमनोरमा *

धूमवानयं पर्वत' इत्याकारकपरामर्शस्य यत्प्रत्यक्षं-'वह्निव्याप्यधूमवानयं पर्वत इति परामर्शमहं जानामी'त्याकारकमनुव्यवसायात्मकं, तत्र परामर्शोऽपि विषय-विधया कारणमिति परामर्शजन्यत्वस्य परामर्शप्रत्यक्षे सत्त्वात्परामर्शजन्यज्ञानमिति लक्षणस्य परामर्शानुव्यवसायेऽतिव्याप्तिः, तद्वारणाय लक्षणे 'हेत्वविषयकत्वे सती'-त्यपि देयमित्याशयः। तन्निवेशे तु निरुक्तपरामर्शप्रत्यक्षे हेतुर्धूमादिरपि विषय एवेति न तत्रातिव्याप्तिः। तादृशं ज्ञानन्तु 'पर्वतो वह्निमा'नित्यनुमित्यात्मकमेवेत्यवधेयम्।

'परामर्शजन्यं ज्ञानमनुमिति'रिति निरुक्तानुमितिलक्षणघटकस्य परामर्शस्य लक्षणमाह मूले-( ५६ पृष्ठे )-व्याप्तीति। साध्यनिरूपितव्याप्तिविशेषणको यः पक्षे हेतोर्वृत्तित्वविषयको निश्चयः स एव परामर्श इत्युच्यते इत्यर्थः।

'व्याप्तिविशिष्टहेतौ या पक्षधर्मता तस्या ज्ञान'मित्येवं रीत्या सप्तमीतत्पुरुषे,-वह्निव्याप्तिविशिष्टे धूमे यत-पक्षधर्मतायाः-पर्वतादिवृत्तित्वस्वरूपायाः—ज्ञानं-व्याप्तिवैशिष्ट्यानवगाहि-'धूमवान्पर्वत' इत्याद्यात्मकं, तस्यापि परामर्शत्वं स्यादतः कर्मधारयं दर्शयति-व्याप्तिविशिष्टस्येति ( न्यायबोधिन्यां ५६ पृष्ठे )।

प्रकारतानिरूपक(पर)त्वात्=लक्षणया प्रकारतानिरूपकत्वार्थकत्वात्।

षष्ठ्या='पक्षधर्मताया ज्ञान'मिति षष्ठीतत्पुरुषसमासीयविग्रहवाक्यघटक-षष्ठ्या। विषयत्वबोधनात्=विषयत्वार्थकत्वात्।

अभेदादिति( न्यायबोधिन्यां ५६ पृष्ठे )। समानविभक्तिकयोर्नामार्थयोरभे-दातिरिक्तसम्बन्धस्याऽव्युत्पन्नत्वादित्याशयः।

व्याप्तिप्रकारकेति। व्याप्तित्वावच्छिन्नविषयतानिरूपकाऽभिन्नमित्यर्थः।

पक्षसम्बन्धेनेति। पक्षवृत्तित्वविषयकमित्यर्थः। पक्षतावच्छेदकावच्छिन्न-विशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपकं तु ज्ञानमिति यावत्।

विषयितेति। विषयितासम्बन्धेन व्याप्तिविशिष्टं यत्पक्षधर्मताज्ञानं स एव परामर्श इत्यर्थः। विषयितासम्बधेन हि ज्ञाने व्याप्त्यादयो विषया वर्त्तन्ते एव।

( न्यायबोधिन्यां ५६ पृष्ठे-) एवं सति = व्याप्तिप्रकारकपक्षसम्बन्धविषयक-ज्ञानमात्रस्य परामर्शत्वे सति। परामर्शलक्षणं=निरुक्तपरामर्शलक्षणम्।

---

* परीक्षा *

उत्तरं—व्याप्तिविषयकपक्षधर्मताज्ञानं परामर्शः। एवञ्च—पक्षनिष्ठविशेष्य-तानिरूपिता या हेतुनिष्ठा प्रकारता, तादृशप्रकारतानिरूपिता या व्याप्तिनिष्ठा प्रकारता, तादृशप्रकारतानिरूपकज्ञानत्वं परामर्शस्य लक्षणम्। 'वह्निव्याप्यधूमवानयं पर्वतः' इत्यस्य पर्वतरूपपक्षनिष्ठविशेष्यतानिरूपित-–धूमात्मकहेतुनिष्ठप्रकारतानिरूपित-व्याप्तिनिष्ठप्रकारतानिरूपकज्ञानत्वेन तत्र लक्षणसमन्वयः। एवञ्च 'वह्निव्याप्य-

यथा 'वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानं परामर्शः। तज्जन्यं—'पर्वतो वह्निमा'निति ज्ञानमनुमितिः।

*** न्यायबोधिनी ***

प्रकारता, तन्निरूपिता[१] या व्याप्तिनिष्ठा प्रकारता, तच्छालि ज्ञानं परामर्श इति निष्कर्षः[२]। एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम्।

अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थं—पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित-संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्न-विधेयताकानुमितित्वावच्छिन्नं प्रति—वह्निव्याप्तिप्रकारतानिरूपिता या धूमत्वावच्छिन्नप्रकारता, तन्निरूपिताभिन्ना पर्वतत्वावच्छिन्ना विशेष्यता, तच्छालिनिर्णयः कारणम्।

( वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यतायाः, धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतायाश्च अभेदानङ्गीकर्तृमते तु–वह्नित्वावच्छिन्नप्रकारतानिरूपित–विशेष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारता-

*** पदकृत्यम् ***

**मर्श इत्यर्थः। घटादिज्ञानवारणाय 'पक्षधर्मते'ति। 'धूमवान्पर्वत' इत्यादिज्ञानवारणाय—व्याप्तिविशिष्टेति। तदिति। परामर्शजन्यमित्यर्थः।**

---

*** बालमनोरमा ***

**१ तन्निरूपिता=हेतुनिष्ठप्रकारतानिरूपिता। प्रकारता=विशेष्यत्वाऽभिन्ना व्याप्तिनिष्ठा प्रकारता। एवञ्च—'प्रकारतानिरूपिता विशेष्यतैव भवति न तु प्रकारतेत्ययुक्तमेत'दित्यपास्तम्।**

२ **'निष्कर्ष' इत्यस्य—'अवश्यं वाच्य' इति शेषः।**

---

*** परीक्षा ***

धूमवानयं पर्वतः' इत्याकारकपरामर्शजन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिरित्यवधेयम्।

**प्रश्नः**—का नाम व्याप्तिः ?।

**उत्तरम्**—प्रतियोगिव्यधिकरण-हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। 'वह्निमान्धूमा'दित्यत्र सद्धेतौ— हेतुः—धूमः तदधिकरणं–पर्वतादिकम्, तत्र वर्तमानः प्रतियोगिव्यधिकरणोऽभावः—घटाभावः, ( न तु वह्न्यभावोऽपि, तत्र पर्वते वह्नेः सत्त्वात् ) तत्प्रतियोगितावच्छेदकं–घटत्वं, तद्भिन्नं साध्यतावच्छेदकं-वह्नित्वं, तदवच्छिन्नं साध्यं वह्न्यादिकं, तदधिकरणं–पर्वतादिकं, तद्वृत्तित्वञ्च धूमे–इति हेतौ लक्षणसमन्वयः।

'यत्र-यत्र धूमस्तत्र-तत्राग्नि'रिति साहचर्यनियमो व्याप्तिः ।

* न्यायबोधिनी *

निरूपित--विशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यताशालिनिर्णयः कारणं वक्तव्यम् ) । स च निर्णयः-'वह्निव्याप्यधूमवान्पर्वतः' इत्याकारको बोध्यः ।

यत्र यत्रेति । 'यत्र'पदवीप्सावशाद् धूमाधिकरणे[1] यावति वह्निमत्त्वलाभाद्यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम् । तदेव स्पष्टयति—साहचर्यनियम इति । एतदर्थस्तु-'नियतसाहचर्यं व्याप्ति'रिति ।

* पदकृत्यम् *

यत्र यत्रेति । 'यत्र यत्र धूमस्तत्र तत्राग्नि'रिति, व्याप्तेरभिनयः । 'साहचर्यनियम' इति लक्षणम्[2] । सह चरतीति–सहचरः, तस्य भावः—साहचर्यं । सामानाधिकरण्यमिति यावत् । तस्य नियमो व्याप्तिरित्यर्थः । स[3] च–अव्यभिचरितत्वम् । तच्च–व्यभिचाराऽभावः । व्यभिचारश्च[4]–साध्याऽभाववद्वृत्तित्वम् । तथा च[5] साध्याऽभाववदवृत्तित्वं व्याप्तिरिति पर्यवसन्नम् । 'महानसं वह्निमत्, धूमा'दित्यादौ–साध्यो वह्निः, तदभाववान्–जलह्रदादिः, तद्वृत्तित्वं- नौकादौ; अवृत्तित्वं–प्रकृते हेतुभूते धूमे–इति कृत्वा–लक्षणसमन्वयः । 'धूमवान् वह्ने'रित्यादौ[6] साध्यो धूमः, तदभाववत्- अयोगोलकं,

* बालमनोरमा *

१ धूमाधिकरणे=पर्वत-गोष्ठ-महानस-चत्वरादौ । यावति=निखिलेऽपि । महिम्नेति । 'निखिलेऽपि पर्वतादौ धूमाधिकरणे वह्निरस्ती'त्युक्तौ धूमव्यापको वह्निरिति स्वरसतः प्रतीयते । तद्वन्निष्ठाऽभावप्रतियोगितानवच्छेदकधर्मवत्त्वस्यैव व्यापकत्वादित्याशयः ।

२ लक्षणं = व्याप्तिलक्षणम् ।

३ स च = सामानाधिकरण्यनियमश्च ।

४ व्यभिचारश्च=व्यभिचाराऽभावघटको व्यभिचारपदार्थश्च ।

५ तथा च = साध्याभाववद्वृत्तित्वरूपव्यभिचारप्रतियोगिकाऽभावस्यैव व्यभिचाराऽभावपदार्थत्वे च ।

६ इत्यादौ = इत्यादावसद्धेतुस्थले ।

* परीक्षा *

'धूमवान्वह्ने'रित्यत्राऽसद्धेतौ च वह्निरूपहेत्वधिकरणेऽयोगोलके वर्त्तमानस्य धूमाभावस्य प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं धूमत्वमिति न तत्र लक्षणसमन्वयः।

## * न्यायबोधिनी *

नियतत्वं-व्यापकत्वम्। साहचर्यं नाम-सामानाधिकरण्यम्। तथा च [1]नियतवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः। अत्र वह्नेर्धूमव्यापकत्वं नाम-धूमसमानाधिकरणाऽत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। तथा हि—धूमाधिकरणे पर्वत-चत्वर[2]-महानसादौ वर्तमानो योऽभावः—घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावः, न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः, कुतः? पर्वतादौ वह्नेः सत्त्वात्। एवं सति धूमाधिकरणे पर्वतचत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं घटत्वादिकम्, अनवच्छेदकं वह्नित्वं, तद्वत्त्वं वह्नौ वर्त्ततेऽतो धूमव्यापकत्वं वह्नौ वर्त्तते। इयमन्वयव्याप्तिः सिद्धान्तानुसारेण।

[3]पूर्वपक्षव्याप्तिस्तु—साध्याऽभाववदवृत्तित्वम्। '[4]साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक-प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाऽभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाऽभाव' इति निष्कर्षः।

## * पदकृत्यम् *

तद्वृत्तित्वमेव—वह्न्यादाविति नातिव्याप्तिः।

---

## * बालमनोरमा *

१ नियतेति। धूमव्यापकवह्निसामानाधिकरण्यमित्यर्थः।

२ चत्वरम्=अङ्गणम्। वर्त्तते इति। एवञ्च धूमव्यापकवह्न्यधिकरणपर्वतादिवृत्तित्वेन धूमे निरुक्ता व्याप्तिरस्तीत्यवधेयम्।

३ इयं=हेतुव्यापकसाध्यसामानाधिकरण्यरूपा। पूर्वपक्षव्याप्तिस्तु=दूषणीया व्यतिरेकिव्याप्तिस्तु।

४ साध्यतेति। 'पर्वतो वह्निमान् धूमा'दित्यत्र—साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकः, साध्यतावच्छेदकवह्नित्वावच्छिन्नप्रतियोगिताकः, (प्रतियोगितावच्छेदकसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नवह्निवैयधिकरण्यावच्छिन्नश्च-) अभावो—'वह्निर्नास्ती'त्यात्मको वह्न्यभावः, तद्वान्—ह्रदः, तन्निरूपिता या—हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्ना वृत्तिता-त्वावच्छिन्ना वृत्तिता, तादृशवृत्तिताप्रतियोगिकोऽभावः—'साध्याभावाधिकरणनिरूपितवृत्तित्वं नास्ती'त्याकारकः, स च धूमे वर्त्तते इति धूमे वह्निव्याप्तिरिति लक्षणसमन्वयः।

[1]व्याप्यस्य पर्वतादिवृत्तित्वं—पक्षधर्मता ।
अनुमानं द्विविधं-स्वार्थं, परार्थञ्च ।

* न्यायबोधिनी *

तच्च[2] केवलान्वयिन्यव्याप्तमिति सिद्धान्तानुसरणम् ।

[3]अनुमानं विभजते—स्वार्थमिति ।

स्वार्थानुमानं नाम—न्यायाऽप्रयोज्यानुमानम् ।

* पदकृत्यम् *

ननु '[4]ज्ञातेयं व्याप्तिः, (परं) 'पक्षधर्मताज्ञान'मित्यत्र का नाम पक्षधर्मता ?—इत्यपेक्षमाणं प्रति तत्स्वरूपं निरूपयति-व्याप्यस्येति । व्याप्यो नाम व्याप्त्याश्रयः । स च धूमादिरेव, तस्य पर्वतादिवृत्तित्वं पक्षधर्मतेत्यर्थः ।

अथ 'कथमनुमानमनुमितिकरणं, कथं वा तस्मादनुमितेर्जनिरि'ति जिज्ञासमानं प्रति लाघवादनुमानविभागमुखेनैव बुबोधयिषुरनुमानं विभजते-अनुमानमिति । द्वैविध्यं दर्शयति—स्वार्थं परार्थं चेति ।

* बालमनोरमा *

१ व्याप्यस्य = वह्न्यादिसाध्यनिरूपितव्याप्तिविशिष्टस्य हेतोर्धूमादेः ।
पर्वतादिवृत्तित्वं = पर्वतादिनिरूपिताधेयत्वम् ।

२ तच्च=साध्याभाववदवृत्तित्वञ्च । केवलान्वयिनि-'वाच्यं ज्ञेयत्वा' दित्यादौ । साध्याभावाऽप्रसिद्धयैवाऽव्याप्तिरित्याशयः ।

३ अनुमानम् = अनुमितिकरणतया प्राचीनाभिमतं लिङ्गपरामर्शात्मकमनुमानम् । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाऽधिकरणेऽवर्त्तमानो यः-साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकोऽभावः, तदधिकरणनिरूपितो यो हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको वृत्तित्वसामान्याऽभावः स व्याप्तिरिति तु व्यतिरेकव्याप्तिलक्षणस्य परमनिष्कर्ष इत्यवधेयम् ।

४ इयं = 'व्याप्तिविशिष्टे'त्यादिनिरुक्तपरामर्शलक्षणघटकीभूता ।
इत्यत्र = निरुक्तपरामर्शलक्षणघटकीभूते 'पक्षधर्मताज्ञान'मित्यत्र ।

* परीक्षा *

प्रश्नः—किं नाम पक्षधर्मत्वम् ? ।

उत्तरम्—साध्यनिरूपितव्याप्तिविशिष्टस्य धूमादिहेतोः पर्वतादिरूपपक्षवृत्तित्वमेव हि पक्षधर्मत्वम् ।

प्रश्नः—अनुमानं ( लिङ्गपरामर्शात्मकं ) कतिविधम् ? ।

उत्तरम्—अनुमानं द्विविधं—स्वार्थानुमानं, परार्थानुमानञ्चेति ।

तत्र—स्वार्थं[1]–स्वानुमितिहेतुः। तथा हि–स्वयमेव भूयो दर्शनेन 'यत्र यत्र धूमस्तत्र तत्राग्नि'रिति महानसादौ व्याप्तिं गृहीत्वा, पर्वतसमीपं गतस्तद्गते चाऽग्नौ सन्दिहानः, पर्वते धूमं पश्यन् व्याप्तिं स्मरति–'यत्र यत्र धूमस्तत्र तत्राग्निः' इति। तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते। अयमेव 'लिङ्गपरामर्श'[2] इत्युच्यते। तस्मात्पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते। तदेतत्–स्वार्थानुमानम्।

### * पदकृत्यम् *

[3]स्वस्यार्थः=प्रयोजनं यस्मात् तत्–स्वार्थमिति समासः। स्वप्रयोजनञ्च स्वस्यानुमेयप्रतिपत्तिः[4]। एवं 'परार्थ'मित्यस्यापि। अयमिति। व्याप्तिबलेन लीनमर्थं गमयतीति–लिङ्गं, तच्च-धूमादि। तस्य परामर्शः=ज्ञानविशेष इत्यर्थः।

तस्मादिति। लिङ्गपरामर्शादित्यर्थः। स्वार्थानुमानमुपसंहरति–तदेतदिति–यस्मादिदं[5] स्वप्रतिपत्तिहेतुस्तस्मात्–एतत्स्वार्थानुमानमित्यर्थः।

### * बालमनोरमा *

१ स्वार्थं=स्वार्थानुमानम्। तत्र=उभयोः स्वार्थपरार्थानुमानयोर्मध्ये। स्वस्य=अनुमातुः पुंसः। प्रयोजनम्=अनुमेयवह्न्यादिसाध्यनिश्चयात्मकं ज्ञानमनुमितिरूपम्।

स्वार्थानुमानस्य स्वार्थानुमितिहेतुत्वं समर्थयते—तथाहीति। स्वयमेव=अनुमाता पुरुष एव। भूयोदर्शनेन–वह्निधूमयोर्भूयोभूयो महानसादौ साहचर्यदर्शनेन। तद्गते=पर्वतस्थे। तदनन्तरं=व्याप्तिस्मरणानन्तरम्। इति ज्ञानम्=इत्येवं परामर्शात्मको निश्चयः। अयमेव='वह्निव्याप्यधूमवानयं पर्वत'इति परामर्श एव।

२ लिङ्गेति। लिङ्गस्य=व्याप्तिविशिष्टस्य हेतोः। परामर्शः=पक्षसम्बन्धितया निश्चयः। तदेव='वह्निव्याप्यधूमवानय'मिति परामर्शात्मकं ज्ञानमेव। अत्र 'तदेत'दिति पाठान्तरं। तद्व्याचष्टे–'यस्मादिति' (पदकृत्ये)।

३ स्वस्य=अनुमातुः। ४ अनुमेयप्रतिपत्तिः=वह्न्यादिसाध्यानुमितिः। 'इत्यस्यापी'त्यस्य—'परानुमेयप्रतिपत्तिर्यस्मादित्यर्थ'इति शेषः। लीनं=सन्दिग्धम्। अर्थं=साध्यम्। लिङ्गं=हेतुः। तस्य=लिङ्गस्य।

५ इदं='वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानम्।

### * परीक्षा *

प्रश्नः—किं नाम स्वार्थानुमानं? किञ्च तल्लक्षणम्?।

उत्तरम्—न्यायाऽप्रयोज्यं स्वानुमितिहेतुरनुमानं–स्वार्थानुमानम्। तथाहि–अनुमाता स्वयमेव महानसादौ भूयो भूयो वह्निधूमयोः साहचर्यं दृष्ट्वा 'यत्र यत्र धूमस्तत्र

यत्तु 'स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुज्यते तत्-परार्थानुमानम् ।

* न्यायबोधिनी *

न्यायप्रयोज्यानुमानं[2]–परार्थानुमानम् । न्यायत्वञ्च[3] प्रतिज्ञाद्यवयवपञ्चकसमु-

* पदकृत्यम् *

क्रमप्राप्तं परार्थानुमानमाह—यत्त्विति । 'यत्पञ्चावयववाक्यं प्रयुज्यते [4]तत्परार्थानुमान'मिति सम्बन्धः । पञ्चावयवेति । अथाऽवयवत्वं नाम–द्रव्यसम-

* बालमनोरमा *

१ 'स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं यत्पञ्चावयववाक्यं प्रयुज्यते (अनुमात्रा) तत्तु परार्थानुमानमित्येवं योजना । स्वयम्=अनुमात्रैव । धूमात्=धूमरूपाद्धेतोः । अनुमाय=निश्चित्य । परप्रतिपत्त्यर्थमिति । परस्य=मध्यस्थस्य या प्रतिपत्तिः=मानसो लिङ्गपरामर्शः, स एव अर्थः=प्रयोजनं यस्य तादृशमित्यर्थः । तत्=पञ्चावयववाक्यम् । परार्थानुमानम्=मध्यस्थीयलिङ्गपरामर्शात्मकपरार्थानुमानप्रयोजकम् । यद्यपि परार्थानुमानशब्दो लिङ्गपरामर्शे एव शक्तः, तथापि प्रकृते उपचाराल्लिङ्गपरामर्शरूपपरार्थानुमानप्रयोजके पञ्चावयववाक्येऽपि प्रयुक्तः–'यद्वाक्यं प्रयुज्यते तत्परार्थानुमान'मितिरीत्या । स्पष्टञ्चेदं पदकृत्ये एवेत्याहुः ।

२ प्रयोज्यत्वञ्च साक्षात्परम्परया वा जन्यत्वमेव ।

३ न्यायत्वञ्चेति । तत्त्वञ्च–उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वम् । उचिता आनुपूर्वी च—प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयनोत्तरनिगमनत्वरूपा । अवयवत्वञ्च—न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वमित्यन्यत्र विस्तरः ।

४ तत्=‘पर्वतो वह्निमान्, धूमवत्त्वा’दित्यादिपञ्चावयववाक्यम् । द्रव्यसमवायीति । यथा घटादेः समवायिकारणं कपालादि घटस्यावयवः । तदसम्भवात्=तादृगवयवत्वाऽसम्भवात् । एते=प्रतिज्ञादयः । अनुमानवाक्यं=प्रतिज्ञादि-

* परीक्षा *

तत्राग्नि'रिति व्याप्तिं गृहीत्वा पर्वतसमीपं प्राप्तस्तत्र पर्वतस्थे वह्नौ–'पर्वते वह्निरस्ति न वे'ति सन्दिहानः-पर्वते धूमं दृष्ट्वा 'यत्र–यत्र धूमस्तत्र-तत्राग्नि'रिति व्याप्तिं स्मरति। तादृशव्याप्तिस्मरणानन्तरञ्च 'वह्निव्याप्यधूमवानय'मिति लिङ्गपरामर्शात्मकं निश्चयज्ञानं तस्य जायते । तस्माच्च लिङ्गपरामर्शात्प्रमातुः पुंसः 'पर्वतो वह्निमा'निति अनुमित्यात्मकं ज्ञानमुत्पद्यते। एवञ्च 'पर्वतो वह्निमा'नित्यनुमितिहेतुतया 'वह्निव्याप्यधूमवानयं पर्वतः' इति लिङ्गपरामर्शः–'स्वार्थानुमान'मित्युच्यते । स्वार्थानुमानत्वञ्च प्रतिज्ञादिपञ्चावयववाक्यसमुदायात्मकन्यायाऽप्रयोज्यानुमानत्वम् ।

प्रश्नः—परार्थानुमानत्वस्य किं लक्षणं ? किञ्च तत् ? ।

उत्तरम्–प्रतिज्ञाहेत्वाद्यवयवपञ्चकसमुदायरूपन्यायप्रयोज्यानुमानत्वं परार्थानु-

'यथा 'पर्वतो वह्निमात्', [1]'धूमवत्त्वात्', 'यो यो धूमवान्स स वह्निमान्'—यथा 'महानसम्' 'तथा चायम्', '[2]तस्मात्तथे'ति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ।

*** न्यायबोधिनी ***

दायत्वम् । अवयवत्वं च—प्रतिज्ञाद्यन्यतमत्वम् ।

*** पदकृत्यम् ***

वाथिकारणत्वम् । प्रतिज्ञादिषु तदसम्भवात्कथमेतेऽवयवाः स्युः ? इति चेत्—अनुमानवाक्यैकदेशत्वात्तु 'अवयवा' इत्युपचर्यन्ते इति गृहाण । नन्वेवमपि पञ्चावयववाक्यस्यानुमानत्वमेव न विचारसहं, तस्य लिङ्गपरामर्शत्वाऽभावादिति चेन्मैवम्, [3]लिङ्गपरामर्शप्रयोजक-लिङ्गे 'अनुमान'मित्युपचारमात्रत्वात् ।

तदुदाहरति—यथेति । तथा चायमिति । अयं च=पर्वतः, तथा=वह्निव्याप्यधूमवानित्यर्थः । तस्मात्तथेति । वह्निव्याप्यधूमवत्त्वाद्वह्निमानित्यर्थः ।

---

*** बालमनोरमा ***

निगमनान्तघटितं 'पर्वतो वह्निमा' नित्यादिमहावाक्यम् । उपचर्यन्ते=अवयवसादृश्यादुपचारेणाऽवयवशब्दस्तत्र प्रयुज्यते । न विचारसहमिति । लिङ्गपरामर्शस्यैवानुमानत्वं हि विचारसहं, न तु पञ्चावयववाक्यस्येत्याशयः ।

१ धूमवत्त्वात्=धूमात् । तथा चायम्=अयं पर्वतो—वह्निव्याप्यधूमवान् ।

२ तस्मात्तथा=वह्निव्याप्यधूमवत्त्वाद्वह्निमान् । अनेन=प्रतिज्ञादिपञ्चावयववाक्येन । प्रतिपादिताल्लिङ्गात्=मानसपरामर्शविषयीभूताद्धूमादितः । परोऽपि=मध्यस्थोऽपि । प्रतिपद्यते=निश्चिनुते ।

३ लिङ्गेति । लिङ्गपरामर्शरूपाऽनुमानप्रयोजकं=विषयविधया परम्परया लिङ्गपरामर्शजनकं यल्लिङ्गं=धूमादि, तत्प्रतिपादकत्वेन पञ्चावयववाक्यस्यानुमानपदेन व्यवहारः, मुख्यमनुमानत्वं तु लिङ्गपरामर्शस्यैवेति भावः ।

---

*** परीक्षा ***

मानत्वं । तथाहि-स्वयमनुमात्रा देवदत्तेन-धूमेन हेतुना पर्वते स्वयं वह्निमनुमाय परस्य यज्ञदत्तादेरपि वह्नयादिविषयकानुमित्यर्थं पञ्चावयववाक्यं प्रयुज्यते । तेन च वाक्येन परस्य यज्ञदत्तादेर्मानसो लिङ्गपरामर्श उत्पद्यते । स एव मानसो लिङ्गपरामर्शः पञ्चावयववाक्यरूपन्यायप्रयोज्यतया परार्थानुमानमित्युच्यते । मानसलिङ्गपरामशरूपपरार्थानुमानप्रयोजकतया 'पर्वतो वह्निमान्धूमा'दित्यादिपञ्चावयववाक्यमपि उपचारात् 'परार्थानुमान'मित्युच्यते । (एवञ्च परार्थानुमानपदेन-परानुमितिहेतुर्मानसो लिङ्गपरामर्शः, पञ्चावयववाक्यञ्चेत्युभयमप्युच्यते—इत्यवधेयम् ) ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। 'पर्वतो वह्निमा'-निति प्रतिज्ञा। 'धूमवत्त्वा'दिति हेतुः। 'यो यो धूमवान् स स वह्निमा'-नित्युदाहरणम्। 'तथा चाऽय'मित्युपनयः। 'तस्मात्तथे'ति निगमनम्।

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्ग-परामर्शोऽनुमानम्।

### * पदकृत्यम् *

अनेनेति। अनेन पञ्चावयववाक्येनेत्यर्थः।

ननु 'पञ्चावयववाक्य'मित्यत्र के ते पञ्चावयवाः ?। अतस्तान्दर्शयति—प्रतिज्ञेति। प्रतिज्ञाद्यन्यतमत्वम्–अवयवत्वम्। साध्यविशिष्टपक्षबोधकवचनं–प्रतिज्ञा। पञ्चम्यन्तं, तृतीयान्तं वा लिङ्गवचनं–हेतुः। व्याप्तिप्रतिपादकदृष्टान्त-वचनम्–उदाहरणम्। उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादक-वचनम्–उपनयः। पक्षे साध्यस्याऽबाधितत्वप्रतिपादकवचनं–निगमनम्। इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन्विशिष्य दर्शयति–पर्वतो वह्निमानित्यादिना।

लिङ्गेति। 'ज्ञायमानं लिङ्गमनुमितिकरण'मिति वृद्धोक्तं न युक्तम्, 'इयं यज्ञशाला वह्निमती, अतीतधूमा'दित्यादौ [1]लिङ्गाभावेऽप्यनुमितिदर्शनादित्यभि-प्रायवान्–लिङ्गपरामर्श एव करणमित्याचष्टे- लिङ्गपरामर्श एवेति।

---

### * परीक्षा *

प्रश्नः—पञ्चावयवाः के ? किञ्च तेषां लक्षणम् ?।

उत्तरम्—प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। प्रतिज्ञाद्यन्यतम-त्वम्—अवयवत्वम्। तत्र–साध्यविशिष्टपक्षबोधकवाक्य प्रतिज्ञा। यथा–'पर्वतो वह्निमा'निति। पञ्चम्यन्तं, तृतीयान्तं वा लिङ्गबोधकं वाक्यं—हेतुः। यथा—'धूमवत्त्वा'दिति। व्याप्तिप्रतिपादिकं वचनम्–उदाहरणम्। यथा–'यो यो धूमवान् स स वह्निमा'निति। व्याप्तिविशिष्टत्वेन हेतोः पक्षवृत्तिताप्रतिपादकं वचनम्–उपनयः। यथा—'वह्निव्याप्यधूमवांश्चाय'मित्यर्थकं 'तथाचाय'मित्यादिवाक्यम्। पक्षे साध्यस्याऽबाधितत्वप्रतिपादकं वाक्यं–निगमः। यथा–'वह्निव्याप्यधूमवत्त्वा-द्वह्निमा'नित्याद्यर्थकं—'तस्मात्तथे'त्यादिवाक्यम्।

प्रश्नः—स्वार्थानुमितिपरार्थानुमित्योः किं करणम् ?।

उत्तरम्–स्वार्थानुमितिपरार्थानुमित्यो 'र्वह्निव्याप्यधूमवानय'मित्याकारको लिङ्ग-

---

१ लिङ्गस्य–हेतोरभावेऽपीत्यर्थः। हेतोर्धूमस्याऽतीतत्वादित्याशयः।

लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति।

[1]अन्वयेन, व्यतिरेकेण च व्याप्तिमत्—[2]अन्वयव्यतिरेकि।

*** न्यायबोधिनी ***

अन्वयेनेति। व्यापकसामानाधिकरण्यरूपव्याप्तिमदित्यर्थः।

*** पदकृत्यम् ***

अनुमानमुपसंहरति—तस्मादिति। अनुमितिकरणत्वादित्यर्थः। [3]अयमेव 'तृतीयज्ञान'मित्युच्यते। [4]तथा हि—महानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद् धूमज्ञानं तदादिमम्। पक्षे यद् धूमज्ञानं तद्द्वितीयम्। अत्रैव वह्निव्याप्यत्वेन यद् धूमज्ञानं तत्तृतीयम्। इदमेव 'लिङ्गपरामर्श' इत्युच्यते।

अनुमानमिति। 'व्यापारवत्कारणं करण'मिति [5]मते व्याप्तिज्ञानमेवानुमानं, लिङ्गपरामर्शो व्यापार इत्यवसेयम्।

अन्वयव्यतिरेकिणो लक्षणमाह—अन्वयेति। तृतीयायाः प्रयोज्यत्वमर्थः।

---

*** बालमनोरमा ***

१ अन्वयेनेति। अन्वयाभिन्नव्याप्तिमदित्यर्थः। अन्वयव्याप्तिश्च—हेतु-व्यापकसाध्यसामानाधिकरण्यरूपेत्यवधेयम्।

२ लिङ्गस्य विशेष्यत्वेनेदं क्लीबत्वम्। 'व्याप्तिमा'निति पाठे तु हेतोर्विशेष्यत्व-मवधेयम्।

३ अयमेव = लिङ्गपरामर्श एव।

४ कथमस्य तृतीयज्ञानत्वमत आह—तथाहीति। अत्रैव=पक्षे एव। इद-मेव = तृतीयज्ञानमेव।

५ इति मते इति। 'फलाऽयोगव्यवच्छिन्नं कारणमेव करण'मिति मते तु लिङ्गपरामर्श एव कारणम्। तदुक्तं मूले—'लिङ्गपरामर्शोऽनुमान'मिति।

---

*** परीक्षा ***

परामर्श एव करणम्। एवञ्चानुमितिकरणतया लिङ्गपरामर्श एवानुमानपदेनोच्यते। 'व्यापारवत्करणमेव करणं न तु फलायोगव्यवच्छिन्नं कारणमपि करण'मिति मते तु—व्याप्तिज्ञानमेवानुमितिकरणतयाऽनुमानम्। लिङ्गपरामर्शस्तु व्यापार इत्यवधेयम्।

प्रश्नः—लिङ्गं कतिविधं ?, किञ्च तल्लक्षणम् ?।

उत्तरम्—लिङ्गं त्रिविधम्-अन्वव्यतिरेकि-केवलान्वयि-केवलव्यतिरेकि-भेदात्। तत्र—अन्वयव्यतिरेकोभयप्रयोज्यव्याप्तिमत्त्वम्-अन्वयव्यतिरेकिहेतुत्वम्। यथा'वह्नि-मान् धूमवत्त्वा'दित्यत्र धूमवत्त्वमन्वयव्यतिरेकि। तत्र हि-धूमवत्त्वहेतौ 'यत्र यत्र

यथा वह्नौ साध्ये धूमवत्त्वम्। 'यत्र धूमस्तत्राग्निर्यथा महानस'मित्यन्वयव्याप्तिः। 'यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा ह्रदः'-इति

### * न्यायबोधिनी *

व्यतिरेकेणेति। व्यतिरेको नाम-अभावः। तथा च साध्याऽभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः। इयञ्च व्याप्तिः—'यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव' इति। 'यत्र'पदवीप्सया वह्न्यभाववति यावति धूमाऽभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते। एवञ्च वह्न्यभावनिष्ठव्याप्तेः [4]स्वाश्रयीभूतवह्न्यभावव्यापकीभूताऽभावप्रतियोगित्वसम्बन्धेन धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन धूमवत्त्वं—व्यातिरेकित्वेन, धूमव्यापकवह्निसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेन-अन्वयित्वेन च गीयते। व्यतिरेकपरामर्शस्तु-'वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान्पर्वत' इत्याकारकः।

### * पदकृत्यम् *

साध्यसाधनयोः साहचर्यम्-अन्वयः। तदभावयोः साहचर्यं—व्यतिरेकः। तथा चाऽन्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमत्-अन्वयव्यतिरेकीत्यर्थः। केवलव्यतिरेकिण्यतिव्याप्तिवारणाय-अन्वयेनेति। केवलान्वयिनि व्यभिचारवारणाय व्यतिरेकेणेति। तथा चाऽन्वयव्याप्तिरुपदर्शितैव। व्यतिरेकव्याप्तिश्च साध्याऽभावव्यापकीभूताऽभावप्रतियोगित्वमित्यर्थः। तदुक्तम्—

---

### * बालमनोरमा *

१ इयमिति। व्यतिरेकव्याप्तिरित्यर्थः। तत्स्वरूपमाह-यत्रेति।

२ इति = इत्येवंरूपा।

३ एवञ्च=धूमाऽभावे वह्न्यभावव्यापकत्वस्य लाभे-वह्न्यभावे धूमाऽभावव्याप्यत्वस्य स्वत एव लाभे च।

४ 'स्वाश्रयीभूते' त्यत्र स्वपदेन वह्न्यभावनिष्ठाया व्याप्तेर्ग्रहः। एवञ्च तादृशव्याप्त्याश्रयीभूत-वह्न्यभाव-व्यापकीभूत-धूमाभाव-प्रतियोगित्वस्य धूमे सत्त्वात्तेन सम्बन्धेन सा व्याप्तिर्धूमेऽस्तीत्याशयः। गीयते इति। 'धूमवत्त्वं व्यतिरेकितयाऽन्वयितया च गीयते' इत्यन्वयः। 'लोकै'रिति शेषः।

---

### * परीक्षा *

धूमस्तत्र तत्राग्निर्यथा महानस' मित्यन्वयव्याप्तेः, 'यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रदः' इति व्यतिरेकव्याप्तेश्च तत्र सत्त्वात्। तत्र-अन्वयव्याप्तिश्च-हेतुव्यापकसाध्य-

व्यतिरेकव्याप्तिः ।

अन्वयमात्रव्याप्तिकं केवलान्वयि ।

## * न्यायबोधिनी *

केवलान्वयिनो लक्षणमाह—अन्वयेति । व्यतिरेकव्याप्तिशून्यत्वे सति, अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम् । अथवा-केवलान्वयिसाधकत्वं हेतोः केवलान्वयित्वम् । साध्ये केवलान्वयित्वं च—अत्यन्ताभावाप्रतियोगित्वम् । तथा[1] च—अभावाऽप्रतियोगिसाध्यकत्वं केवलान्वयिहेतोर्लक्षणम् ।

## * पदकृत्यम् *

'व्याप्यव्यापकभावो हि [2]भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥
अन्वये साधनं व्याप्यं, साध्यं व्यापकमिष्यते ।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः' ॥ इति ॥

केवलान्वयिनो लक्षणमाह-अन्वयेति । अन्वयेनैव व्याप्तिर्यस्मिन् स

## * बालमनोरमा *

१ तथा च-एवं सति । लक्षणं=निष्कृष्टं लक्षणम् ।

२ भावयोः-साध्यहेत्वोर्यादृग्व्याप्यव्यापकभावस्ततो विपरीतोऽभावयोर्व्याप्यव्यापकभाव इत्यर्थः । पूर्वोक्तमेव विशदयति—अन्वये इति । अन्वये=भावयोर्व्याप्यव्यापकभावे, साधनं व्याप्यं भवति, साध्यं वह्न्यादिकञ्च—व्यापकं भवति । अन्यथा=व्यतिरेके तु साध्याऽभावो व्याप्यो भवति, साधनात्ययः=हेत्वभावश्च व्यापको भवतीत्यर्थः ।

## * परीक्षा *

सामानाधिकरण्यरूपा । व्यतिरेकव्याप्तिश्च—साध्याभाववदवृत्तित्वरूपेति विवेकः ।

प्रश्नः—केवलान्वयिहेतोः किं लक्षणम् ? । किञ्च तदुदाहरणम् ? ।

उत्तरम्—अन्वयमात्रव्याप्तिकत्वं केवलान्वयित्वम् । यथा 'घटोऽभिधेयः प्रमेयत्वात्पटव'दित्यत्र प्रमेयत्वाभिधेयत्वयोर्हेतुसाध्ययोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि पदार्थस्य प्रमेयत्वादभिधेयत्वाच्च तदभावस्यैवाऽप्रसिद्धेः । अत्यन्ताऽभावाऽप्रतियोगित्वञ्च केवलान्वयित्वम् । तच्चाभिधेयत्वे प्रमेयत्वे च बोध्यम् । ( प्रमेयत्वं हि—ईश्वरप्रमाविषयत्वम् । अभिधेयत्वञ्च—सकलपदाभिधेयत्वम् । तच्च—अत्यन्ताभावाऽप्रतियोगितया केवलान्वयि ) ।

यथा 'घटोऽभिधेयः प्रमेयत्वात्पटवत्'। अत्र प्रमेयत्वाभिधेयत्वयो-र्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च।

* न्यायबोधिनी *

[1]एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि [2]सङ्गच्छते। साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावात्—'अन्वयमात्रव्याप्तिकं केवलान्वयी'ति मूलकारोक्तं लक्षणमुपपन्नम्। नचात्यन्ताऽभावाप्रतियोगित्वरूपकेवलान्वयित्वमाकाशाऽभावे, संयोगाभावे चाऽव्याप्तमिति वाच्यं, [3]स्वविरोधिवृत्तिमदत्यन्ताभावाऽप्रतियोगित्वस्यैव तदर्थत्वात्। एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वं-केवलान्वयित्वमिति नव्याः।

* पदकृत्यम् *

तथा। प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिं निराकरोति—अत्रेति। अभिधेयत्वसाध्यकानुमाने इत्यर्थः। कुतस्तन्निषेधोऽतस्तत्र हेतुमाह-सर्वस्येति। पदार्थमात्रस्येत्यर्थः। तथा च सकलपदाभिधेयत्वस्य, ईश्वरप्रमाविषयत्वस्य च

---

* बालमनोरमा *

१ हेतुसाध्ययोरुभयोरव्यतिरेके मात्रपदघटितम्–'अन्वयमात्रव्याप्तिक'मिति मूलस्थं लक्षणमित्यभिप्रायेण– व्यतिरेकव्याप्तिशून्यत्वे सती'त्यादि प्रथमं लक्षणं न्यायबोधिन्यामुपात्तम्। साध्यमात्रस्याऽव्यतिरेकेऽपि केवलान्वयित्वं सम्भवतीत्याशयेन च लक्षणान्तरं तत्रैव—'अथवे' त्यादिना।

केवलान्वयि साध्यं यस्य हेतोस्तस्य भावः–केवलान्वयिसाध्यकत्वम्। एतच्च= द्वितीयं केवलान्वयिलक्षणञ्च। व्यतिरेकित्वेऽपि=अभावप्रतियोगित्वेऽपि। सङ्गच्छते इति। केवलान्वयिसाध्यकत्वस्य तत्रानपायादिति भावः।

२ यथा 'घटोऽभिधेयो द्रव्यत्वा'दित्यादौ।

३ स्वविरोधीति। स्वविरोधी=प्रतियोगिव्यधिकरणः, वृत्तिमांश्च योऽत्यन्ताऽभावस्तदप्रतियोगित्वमेव केवलान्वयित्वमित्यर्थः। स्वं—प्रतियोगी। अयमाशयः–अवृत्तिपदार्थस्य गगनस्याभावः सर्वत्रैवेति गगनाभावः केवलान्वयी, एवं संयोगस्याऽव्याप्यवृत्तितया संयोगाधिकरणेऽपि संयोगाभावस्य सत्त्वेन संयोगाभावः केवलान्वयी। तत्र च अभावाप्रतियोगित्वं नास्ति, गगनाभावस्य गगनाभावाभावप्रतियोगित्वात्। एवञ्च तत्र केवलान्वयिलक्षणं यद्यप्यव्याप्तं, तथापि वृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यैव तल्लक्षणस्य विवक्षणेन गगनाभावाभावस्य गगनस्वरूपस्य चाऽवृत्तितया न तत्र केवलान्वयित्वहानिः, वृत्तिमदभावाऽप्रतियोगित्वस्य सुस्थ-

व्यतिरेकमात्रव्याप्तिकं—केवलव्यतिरेकि । यथा'पृथिवीतरेभ्यो भिद्यते, गन्धवत्वात्, यदितरेभ्यो न भिद्यते न तद्गन्धवत्-यथा

### * न्यायबोधिनी *

केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति। अन्वयव्याप्तिशून्यत्वे सति, व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम्। यथा पृथिवीति। अत्र पृथिवीत्वावच्छिन्नं—पक्षः, पृथिवीतरजलाद्यष्टभेदः-साध्यः, गन्धवत्त्वं—हेतुः। अत्र 'यद्गन्धवत्तदितरभेदव'दित्यन्वयदृष्टान्ताभावाद्गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहाऽसम्भवः। किन्तु 'यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा जलादिक'मिति व्यतिरेकदृष्टान्ते जलादावितरभेदाऽभावरूपसाध्याऽभावव्यापकता गन्धाऽभावे गृह्यते। इममेवार्थं मनसि निधाय—'यदितरेभ्यो न भिद्यते न तद्गन्धवत्, यथा जल'मिति ग्रन्थेन मूलकारो व्याप्तिमेव प्रदर्शितवान्।

### * पदकृत्यम् *

अत्यन्ताऽभावाप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावाऽप्रसिद्ध्या तद्घटितव्यतिरेकव्याप्तिर्न सम्भवत्येवेति भावः।

केवलव्यतिरेकिणो लक्षणमाह-व्यतिरेकेति। व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्तथा। अन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय—मात्रेति। न चेयं तथेति।

---

### * बालमनोरमा *

त्वात्। एवं संयोगाभावाभावोऽपि न प्रतियोगिविरोधी, प्रतियोग्यधिकरणेऽपि तस्य वर्त्तमानत्वादिति न तत्राप्यव्याप्तिरिति। एकजातीयसम्बन्धेन-स्वरूपसम्बन्धेन।

१ तदभावाऽप्रसिद्ध्या=तादृशाभिधेयत्वप्रमेयत्वाभावाऽप्रसिद्ध्या। तद्घटितेति। अभावघटितेत्यर्थः।

---

### * परीक्षा *

प्रश्नः—केवलव्यतिरेकिणः किं लक्षणम्? किञ्च तदुदाहरणम्?

उत्तरम्—अन्वयव्याप्तिशून्यत्वे सति, व्यतिरेकव्याप्तिमत्त्वं हेतोः केवलव्यतिरेकित्वम्। यथा-'पृथिवी इतरेभ्यो जलादिभ्यो भिद्यते, गन्धवत्त्वात्, यदितरेभ्यो न भिद्यते न तद्गन्धवत्, यथा जलम्, न चेयं पृथिवी गन्धाभाववती, तस्मान्न इतरभेदाभाववती'—इत्यत्र पृथिवीमात्रस्य पक्षतया 'यद्गन्धवत्तदितरभिन्न'मित्यन्वयदृष्टान्तस्याभावेन गन्धरूपहेतुव्यापकेतरभेदरूपसाध्यसामानाधिकरण्यात्मकाऽन्वय-

**जलम्, न चेयं तथा, तस्मान्न तथे' ति। अत्र 'यद् गन्धवत् तदितरभिन्न' मित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात्। सन्दिग्ध-**

### * न्यायबोधिनी *

एवंप्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरम्—'इतरभेदाभावव्यापकीभूताभावप्रतियोगि-गन्धवती पृथिवी' त्याकारकव्यतिरेकिपरामर्शात्पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपि-तेतरभेदत्वावच्छिन्नविधेयताका—'पृथिवी इतरभेदवती'—त्याकारिकाऽनुमितिर्जायते इति तत्त्वम्।

यथाश्रुतमूलार्थस्तु—**यथा जलमिति**। यत्—जलम्—इतरेभ्यो न भिद्यते—इतरभेदाभाववत्—न तद्गन्धवत्-जलमितरभेदाभावव्यापकगन्धाभाववत्-इत्येव-म्प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यते इत्यर्थः। **न चेयं तथा**। इयं=पृथिवी, तथा=इतरभेदाभावव्यापकगन्धाभाववती न, किन्तु तद-भावात्मकगन्धवती। **तस्मान्न तथेति**। तस्मात्=गन्धाभावाभाववत्त्वात्। तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन 'तस्मा' दिति पञ्चम्यन्ताद्-गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः। न तथा=इतरभेदाभाववती न, किन्तु इतरभेदाभावाभाववती=इतरभेदवतीत्यर्थः पर्यवसन्नः।

### * पदकृत्यम् *

**इयं=पृथिवी, न तथा=न गन्धाभाववतीत्यर्थः। तस्मान्न तथेति। गन्धाभावव-त्त्वाभावादितरभेदाभाववती नेत्यर्थः।**

**नन्वत्र किमिति नान्वयव्याप्तिरित्याशङ्क्य परिहरति—अत्रेति। इतरभेद-साधनानुमाने इत्यर्थः। इदमुपलक्षणम्—(१) 'जीवच्छरीरं सात्मकं, प्राणादि-मत्त्वात्, यन्नैवम् तन्नैवम्, यथा घटः।' (२) 'प्रत्यक्षादिकं प्रमाणमिति व्यवहर्तव्यं, प्रमाकरणत्वात, यन्नैवम् तन्नैवम्—यथा प्रत्यक्षाभासः।' (३) 'विवादास्पदम् आका-शमिति व्यवहर्तव्यं, शब्दवत्त्वा'दित्यादिकमपि केवलव्यतिरेकीति द्रष्टव्यम्।**

---

### * परीक्षा *

व्याप्तिग्रहस्याभावः। 'यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावः, यथा जलादिकम्' इति व्यतिरेकदृष्टान्ते च जलादावितरभेदाभावरूप-साध्याभाव-व्यापकत्वं गन्धाभावे (हेत्वभावे) गृह्यते। एवञ्च-साध्याऽभावव्यापकीभूताऽ-भावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमत्त्वं तत्राऽस्तीति समन्वयो बोध्यः।

साध्यवान् पक्षः ।

यथा धूमवत्त्वे हेतौ पर्वतः ॥

## * न्यायबोधिनी *

पक्षलक्षणमाह–सन्दिग्धेति । साध्यप्रकारकसन्देहविशेष्यत्वं पक्षत्वम् । इदञ्च लक्षणम्–अनुमितेः पूर्वं साध्यसन्देहो नियमेन जायते इत्यभिप्रायेण प्राचीनैः कृतम् । गगनविशेष्यकमेघप्रकारकसन्देहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन 'गगनं मेघव' दित्याकारिकाया गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया अनुमितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम् ।

## * पदकृत्यम् *

अत्रेदं बोध्यम्- अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं स्वसाध्यं साधयितुं क्षमते । तानि कानीति चेत् श्रूयताम्,–पक्षधर्मत्वं, सपक्षसत्त्वं–विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्–असत्प्रतिपक्षत्वं चेति । अबाधितः साध्यरूपो विषयो यस्य तत्तथोक्तम्, तस्य भावस्तत्त्वम् । एवं साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष-इत्युच्यते । स नास्ति यस्य सोऽसत्प्रतिपक्षः, तस्य भावस्तत्त्वमिति बोध्यम् । केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते, तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात् । केवलव्यतिरेक्यपि तथा, तस्य सपक्षविपर्ययेण तत्सत्त्वविपर्ययादिति । उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वात् ।

अथ 'पृथिवीमात्रस्य पक्षत्वा'दित्यत्र किं नाम पक्षतेत्यपेक्षायां तां निर्वक्ति–सन्दिग्धेति । सपक्षवारणाय–सन्दिग्धेति ।

---

## * परीक्षा *

प्रश्नः—पक्षस्य किं लक्षणम् ? ।

उत्तरम्— साध्यप्रकारकसन्देहविशेष्यत्वम् पक्षत्वम् । यथा 'पर्वतो वह्निमान् धूमवत्त्वा'दित्यत्र- पर्वतः । तत्र हि–साध्यप्रकारको यः 'पर्वतो वह्निमान्नवे'तिसन्देहस्तद्विशेष्यत्वं पर्वते एवेति तत्र लक्षणसमन्वयो बोध्यः ।

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ।**

**निश्चितसाध्याऽभाववान् विपक्षः । यथा तत्रैव महाह्रदः ।**

**सव्यभिचार-विरुद्ध-सत्प्रतिपक्षा-ऽसिद्ध-बाधिताः**

*** न्यायबोधिनी ***

सपक्षलक्षणमाह—**निश्चितेति** । साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् । निश्चयश्च—'महानसं वह्निम'दित्याकारकः ।

विपक्षलक्षणमाह—निश्चितसाध्याभावेति । साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् । निश्चयश्च 'ह्रदो वह्न्यभाववा'नित्याकारकः[1] ।

एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति—**सव्यभिचारेति** । हेतुवदाभासन्ते इति-हेत्वाभासाः, दुष्टहेतव इत्यर्थः । दोषाश्च-सव्यभिचार-विरोध-सत्प्रति-

*** पदकृत्यम् ***

**निश्चितेति । पक्षेऽतिव्याप्तिवारणाय-निश्चितेति तत्रैवेति । धूमवत्त्वे हेतावेवेत्यर्थः ।**

**निश्चितसाध्याभावेति । सपक्षेऽतिव्याप्तिवारणाय-साध्येति । पक्षेऽति-व्याप्तिवारणाय-निश्चितेति । तत्रैव = धूमवत्त्वे एव ।**

*** बालमनोरमा ***

**१ तादृशनिश्चयविशेष्यत्वं च महाह्रदे इति तत्र विपक्षलक्षणसमन्वय इति भावः ।**

---

*** परीक्षा ***

**प्रश्नः**—सपक्षस्य ( दृष्टान्तस्य ) किं लक्षणं ? किञ्चोदाहरणम् ? ।

**उत्तरम्**–साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् । यथा–'पर्वतो वह्निमान्, धूमवत्त्वात्, यथा महानस'मित्यत्र–महानसम् । तत्रहि–'महानसं वह्निम'दित्याकारको यः साध्यप्रकारको निश्चयस्तद्विशेष्यत्वं महानसे इति महानसे सपक्षलक्षण-समन्वयः । पक्षेऽतिव्याप्तिवारणाय च 'निश्चिते'ति विशेषणम् ।

**प्रश्नः**—विपक्षस्य किं लक्षणम् ? किञ्च तदुदाहरणम् ? ।

**उत्तरम्**—साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् । यथा 'वह्निमान्धूमा'दित्यत्र महाह्रदः । तत्र हि–'महाह्रदो वह्न्यभाववा'नित्याकारको यः साध्याभावप्रकारको निश्चयः तद्विशेष्यत्वं महाह्रदे इति महाह्रदे विपक्षलक्षणसमन्वयः । सपक्षेऽतिव्याप्तिवारणाय-सध्याभावेति । पक्षेऽतिव्याप्तिवारणाय–निश्चितेति ।

पञ्च हेत्वाभासाः ।

[1]सव्यभिचारोऽनैकान्तिकः । स त्रिविधः-साधारणाऽसाधारणाऽनुपसंहारिभेदात् ।

## * न्यायबोधिनी *

पक्षा-ऽसिद्धि-बाधाः । एकज्ञानविषयप्रकृतहेतुतावच्छेदकसम्बन्धेन एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः । यद्विषयकत्वेन ज्ञानस्यानुमिति-तत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं दोषसामान्यस्य लक्षणम् । हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते, व्याप्तिज्ञानप्रतिबन्धो वा । अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः । सव्यभिचारं विभज्य दर्शयति— **साधारणेति** । साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम् । साधारणत्वं साध्याऽभाववद्वृत्तित्वम् ।

'पर्वतो वह्निमान्, प्रमेयत्वा'दित्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्व-

## * पदकृत्यम् *

हेतून्निरूप्य प्रसङ्गाद्धेत्वाभासानाह—**सव्यभिचारेति** । हेतुवदाभासन्ते इति हेत्वाभासाः । तत्त्वं चानुमिति-तत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् । बाधस्थले 'वह्निरनुष्ण' इत्यनुमितिप्रतिबन्धकं यज्ज्ञानम्—उष्णत्ववद्वह्नावनुष्णत्वसाधकं 'द्रव्यत्व' मित्याकारकं, तद्विषयत्वस्य विषयतासम्बन्धेन द्रव्यत्वरूपहेत्वाभासे सत्त्वाल्लक्षणसमन्वयः । सद्धेतुवारणाय 'यथार्थे' ति । घटादिवारणाय 'अनुमितितत्करणप्रतिबन्धके' ति । व्यभिचारिणि अव्याप्तिवारणाय 'तत्करणान्यतरे' ति ।

---

## * बालमनोरमा *

१ ऐकान्तिकः—साध्यनिरूपितव्याप्तिमान् । तद्भिन्नः—अनैकान्तिकः = साध्यनिरूपितव्याप्तिग्रहप्रतिबन्धकग्रहविषयः । व्यभिचारीति यावत् ।

२ व्याप्तिज्ञानञ्च अनुमितिकरणमिति अनुमितितत्करणाऽन्यतरप्रतिबन्धकतया दोषे निरुक्तलक्षणसमन्वयो बोध्यः ।

---

## * परीक्षा *

प्रश्नः—हेत्वाभासाः कति ? कश्च हेत्वाभासपदार्थः ? ।

उत्तरम्—सव्यभिचार-विरुद्ध-सत्प्रतिपक्षा-ऽसिद्ध-बाधिताः पञ्च हेत्वाभासाः । हेतुवदाभासन्ते इति हेत्वाभासाः । दुष्टा हेतव इत्यर्थः । दोषाश्च व्यभिचार-विरोध-सत्प्रतिपक्षा-ऽसिद्धि-बाधाख्याः पञ्च ।

तत्र–साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा 'पर्वतो वह्निमान् प्रमेयत्वा[1]'दिति। प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्।

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः ।

*** न्यायबोधिनी ***

रूपव्यभिचारे ज्ञाते वह्न्यभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

असाधारण इति । सर्वसपक्षव्यावृत्तत्वं–निश्चितसाध्यवदवृत्तित्वम् । साध्य-

*** पदकृत्यम् ***

तत्रेति । साधारणादित्रितयमध्ये इत्यर्थः । अथ विरुद्धेऽतिप्रसक्तिरिति मास्म द्रष्यः, सपक्षवृत्तित्वस्याऽपि निवेशात् । अथैवमपि स्वरूपाऽसिद्धेर्दूषणं जागर्तीति मा वह गर्वं, पक्षवृत्तित्वस्याऽपि तथात्वात् ।

पक्षमात्रेति । सर्वे ये सपक्षा विपक्षास्तेभ्यो व्यावर्तते इति सर्वसपक्ष-

---

*** बालमनोरमा ***

१ 'अत्र प्रमेयत्वरूपो हेतुः साधारणाऽनैकान्तिक' इति शेषः ।

---

*** परीक्षा ***

प्रश्नः—सव्यभिचारस्य किं लक्षणं, स च कतिविधः ? । के च ते भेदाः ? ।

उत्तरम्—साधारणाद्यन्यतमत्वं सव्यभिचारत्वम् । सच सव्यभिचारस्त्रिविधः, साधारणाऽसाधारणाऽनुपसंहारिभेदात् ।

प्रश्नः—साधारणस्य किं लक्षणम् ? । किञ्च साधारणस्योदाहरणम् ?

उत्तरम्—पक्षवृत्तित्वे सति, सपक्षवृत्तित्वे सति, साध्याभावाधिकरणवृत्तित्वं साधारणत्वम् । यथा पर्वतो वह्निमान् प्रमेयत्वा'दित्यत्र प्रमेयत्वरूपो हेतुः पक्षे पर्वते, सपक्षे–महानसे च वर्त्तते, एवं वह्निरूपसाध्याभावाधिकरणे ह्रदे च वर्त्तते इति–स प्रमेयत्वरूपो हेतुः साधारणोऽनैकान्तिक इत्युच्यते । लक्षणे–विरुद्धेऽतिव्याप्तिवारणाय-'पक्षवृत्तित्वे सती'ति । स्वरूपासिद्धिवारणाय-'सपक्षवृत्तित्वे सती'-ति । सद्धेतावतिव्याप्तिवारणाय च विशेष्यदलम् ।

प्रश्नः—असाधारणस्य किं लक्षणम् ? । किञ्च तदुदाहरणम् ?

उत्तरम्—सर्वसपक्षविपक्षव्यावृत्तित्वे सति, पक्षमात्रवृत्तित्वम्-असाधारणत्वम् । यथा 'शब्दो नित्यः शब्दत्वा'दित्यत्र शब्दत्वरूपो हेतुः-सर्वेभ्यः सपक्षेभ्यो नित्येभ्यः परमाण्वादिभ्यः, सर्वेभ्यो विपक्षेभ्योऽनित्येभ्यो घटादिभ्यश्च व्यावृत्तः सन् शब्दरूपपक्षमात्रवृत्तिरिति स शब्दत्वरूपो हेतुरसाधारण इत्युच्यते ।

नित्यः श्रावणत्वाच्छब्दत्ववत् ।' 'शब्दो नित्यः कार्यत्वाद् घटवत्' ।

असिद्धस्त्रिविधः । आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्चेति ।

आश्रयासिद्धो यथा—'गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत् ।' अत्र गगनारविन्दमाश्रयः, स च नास्त्येव ।

### * न्यायबोधिनी *

सत्प्रतिपक्ष इति यावत् । साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि ।

आश्रयासिद्ध इति । आश्रयासिद्धिर्नाम—पक्षतावच्छेदकविशिष्टपक्षाऽप्रसिद्धिः । यथेति । अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम् ।

### * पदकृत्यम् *

इत्यर्थः । अयमेव 'प्रकरणसम' इत्युच्यते । विरुद्धवारणाय 'हेत्वन्तरं यस्ये'ति । वह्न्यादिवारणाय—'साध्याभावे'ति ।

असिद्धं विभजते-असिद्ध इति । आश्रयाऽसिद्धान्यतमत्वम्-असिद्धत्वम् ।

आश्रयाऽसिद्धत्वञ्च पक्षतावच्छेदकाऽभाववत्पक्षकत्वम् । भवति हि अरविन्दत्वे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्पक्षकत्वम्, अरविन्दरूपपक्षे गगनीयत्वविरहात् । ननु किमरविन्दे गगनीयत्वविरहोऽत आह—अत्रेति । उपदर्शितानुमाने इत्यर्थः ।

---

### * परीक्षा *

नित्यः श्रावणत्वात्, शब्दत्वव' दित्यत्र श्रावणत्वरूपहेतोः—'शब्दोऽनित्यः कार्यत्वाद्घटव' दिति—साध्यभावानुमापककार्यत्वरूपहेत्वन्तरकत्वात्सत्प्रतिपक्षता ।

**प्रश्नः**—असिद्धस्य किं लक्षणम् ? । स च असिद्धः कतिविधः ? ।

**उत्तरम्**—आश्रयाऽसिद्धाद्यन्यतमत्वम् असिद्धत्वम् । स च असिद्धस्त्रिविधः-आश्रयासिद्ध-स्वरूपासिद्ध-व्याप्यत्वासिद्धभेदात् ।

**प्रश्नः**—आश्रयासिद्धस्य किं लक्षणं ? किञ्च तदुदाहरणम् ? ।

**उत्तरम्**—पक्षतावच्छेकाभाववत्पक्षकत्वम्-आश्रयाऽसिद्धहेतुत्वम् । यथा—

स्वरूपासिद्धो यथा—'शब्दो गुणश्चाक्षुषत्वात्, रूपवत्।' अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात्।

* न्यायबोधिनी *

स्वरूपासिद्ध इति। स्वरूपासिद्धिर्नाम–पक्षे हेत्वभावः। तथा च हेत्वभाव-विशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम्।

* पदकृत्यम् *

पक्षे हेत्वभावः—स्वरूपासिद्धिः। सद्धेत्वभावेऽतिव्याप्तिवारणाय–पक्षे इति। घटाद्यभाववारण-हेत्विति। सोऽयं स्वरूपाऽसिद्धः शुद्धासिद्ध–भागासिद्ध–विशेषणासिद्ध–विशेष्यासिद्धभेदेन चतुर्विधः। तत्राद्यस्तूपदर्शित एव। द्वितीयो यथा–'उद्भूतरूपादिचतुष्टयं गुणः, रूपत्वा'दित्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन तस्य भागे स्वरूपासिद्धत्वम्। तृतीयो यथा–'वायुः प्रत्यक्षः, रूपवत्त्वे सति स्पर्शवत्त्वा'-दित्यत्र रूपवत्त्वविशेषणस्य वायाववृत्तेस्तद्विशिष्टस्पर्शवत्त्वस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति, विशेषणाभावे विशिष्टस्याप्यभावात्। तुरीयो यथा—अत्रैव[1] विशेषणविशेष्यवैपरीत्येन हेतुः। तस्य स्वरूपासिद्धत्वं तु विशेष्याऽभाव-प्रयुक्तविशिष्टाभावादिति बोध्यम्।

---

* परीक्षा *

गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दव'दित्यत्रारविन्दरूपपक्षे गगनीयत्वविरहादरविन्दत्वरूपे हेतौ गगनीयत्वरूपपक्षतावच्छेदकाभाववत्पक्षकत्वादरविन्दत्वमाश्रयाऽसिद्धम्।

प्रश्नः—स्वरूपाऽसिद्धस्य किं लक्षणम्? किञ्च तदुदाहरणम्?

उत्तरम्—हेत्वभाववत्पक्षकत्वं स्वरूपाऽसिद्धहेतुत्वम्। यथा—'शब्दो गुणश्चाक्षुषत्वाद्रूपव'दित्यत्र शब्दस्य श्रावणतया चाक्षुषत्वं शब्दे नास्तीति–चाक्षुषत्व-रूपे हेतौ हेत्वभाववत्पक्षकत्वमुपपन्नम्। अतश्चाक्षुषत्वं स्वरूपासिद्धम्।

---

१ अत्रैव = 'वायुः प्रत्यक्षः स्पर्शवत्त्वे सति रूपवत्त्वा'दित्यत्रैव।

सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः।

साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताऽभावप्रयोगित्वं-साधनाव्यापकत्वम्।

### * न्यायबोधिनी *

व्याप्यत्वासिद्ध इति। प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद् धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्। एवं-वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतं, तदेव व्यभिचरितत्वम्। तथा च-उपाधिव्यभिचरितत्वं साधने गृहीतं चेत्-उपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव।

### * पदकृत्यम् *

**व्याप्यत्वासिद्धं निरूपयति-सोपाधिक इति। ननु कोऽयमुपाधिरत आह-साध्येति। 'साधनाऽव्यापक उपाधि'रित्युक्ते 'शब्दोऽनित्यः कृतकत्वा'दित्यत्र 'सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्व'मप्युपाधिः स्यात्, तदर्थं साध्यव्यापकत्वमुक्तम्। तावत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने 'कृतकत्व'मुपाधिः स्यात्, तदर्थं साधनाऽव्यापकत्वमुक्तम्। उपाधिभेदमादायाऽसम्भववारणाय व्यापकत्वशरीरेऽप्यत्यन्तपदमादेयम्। साधनभेदमादाय साधनस्योपाधित्ववारणाय व्यापकशरीरेऽप्यत्यन्तपदमवश्यं देयम्।**

---

### * परीक्षा *

प्रश्नः—व्याप्यत्वासिद्धस्य किं लक्षणम्?। उपाधिपदार्थश्च कः?।

उत्तरम्—सोपाधिकत्वं व्याप्यत्वासिद्धत्वम्। यथा 'पर्वतो धूमवान्, वह्निमत्वा' दित्यत्र आर्द्रेन्धनसंयोगरूपोपाधिमत्त्वाद्वह्निमत्त्वात्मको हेतुर्व्याप्यत्वासिद्ध इत्युच्यते।

उपाधिश्च-साध्यव्यापकत्वे सति साधनाऽव्यापकत्वम्। प्रकृते 'पर्वतो धूमवान्वह्निमत्त्वा'दित्यत्र आर्द्रेन्धनसंयोग उपाधिः। तथा हि-धूमरूपसाध्याधिकरणपवतवृत्तियोऽत्यन्ताभावः—घटाभाव एव, न तु 'आर्द्रेन्धनसंयोगो नास्तीति, तत्रार्द्रन्धनसंयोगस्य वर्त्तमानत्वात् [ आर्द्रेन्धनसद्भावे एव धूमोत्पत्तेः ]। एवञ्च तादृशघटाभावप्रतियोगित्वं-घटे, अप्रतियोगित्वञ्च आर्द्रेन्धनसंयोगे—इत्येवंरीत्या

यथा—'पर्वतो धूमवान् वह्निमत्त्वा'दित्यत्रार्द्रेन्धनसंयोग उपाधिः। तथाहि-'यत्र धूमस्तत्रार्द्रेन्धनसंयोग' इति,[1]साध्यव्यापकत्वम्। 'यत्र वह्नि-

* न्यायबोधिनी *

अनुमानप्रकारश्च—पूर्वानुमानस्थहेतुं पक्षीकृत्य 'वह्निर्धूमव्यभिचारी, धूम-

* पदकृत्यम् *

सोऽयमुपाधिस्त्रिविधः–(१) केवलसाध्यव्यापकः, (२) पक्षधर्मावच्छिन्नसाध्यव्यापकः, (३) साधनावच्छिन्नसाध्यव्यापकश्चेति।

तत्राद्य [2]उपदर्शितः। एवं 'क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका, हिंसात्वात्, क्रतुबाह्यहिंसाव'दित्यत्र निषिद्धत्वमुपाधिः[3]। तस्य यत्र–अधर्मजनकत्वं तत्र निषिद्धत्वमिति साध्यव्यापकता। यत्र हिंसात्वं तत्र न निषिद्धत्वमिति निषिद्धत्वमुपाधिः साधनाऽव्यापकः, क्रतुहिंसायां निषिद्धत्वस्याऽभावात्। 'मा हिंस्यात्सर्वा भूतानि' इति सामान्यवाक्यतः 'पशुना यजेते'त्यादिविशेषवाक्यस्य बलीयस्त्वात्। अतो हिंसात्वं नाऽधर्मजनकत्वे प्रयोजकम्; अपि तु निषिद्धत्वमेवेत्यादिकमपि द्रष्टव्यम्।

द्वितीयो [4]यथा—'वायुः प्रत्यक्षः,प्रत्यक्षस्पर्शाश्रयत्वा'दित्यत्रोद्भूतरूपवत्त्व-

---

* बालमनोरमा *

८० पृष्ठे मूले—सोपाधिक इति। उपाधिविशिष्ट इत्यर्थः। साध्यव्यापकत्वं=धूमव्यापकत्वम्। साधनाऽव्यापकत्वं=वह्निरूपहेतोरव्यापकत्वम्। उपाधिरिति। अत्रार्द्रेन्धनसंयोगस्य धूमरूपसाध्याधिकरणे महानसादौ यावत्स्येव वर्त्तमानतया साध्यव्यापकत्वं, वह्निरूपहेत्वधिकरणे यावदन्तर्गतेऽयोगोलके चाऽवर्त्तमानया वह्निरूपहेत्वव्यापकत्वमिति तस्योपाधित्वं स्पष्टम्।

---

* परीक्षा *

आर्द्रेन्धनसंयोगः साध्यव्यापकः। एवं वह्निरूपहेतुमदयोगोलकनिष्ठार्द्रेन्धनसंयोगाऽभावप्रतियोगित्वस्याप्यार्द्रेन्धनसंयोगे सत्त्वादार्द्रेन्धनसंयोगः साधनाऽव्यापकः। तदेवं साध्यव्यापकत्वे सति, साधनाऽव्यापकत्वादार्द्रेन्धनसंयोगोऽत्रोपाधिः। सोपाधिकत्वाच्च 'धूमवान्वह्ने'रित्यादौ वह्निरूपहेतोर्व्याप्यत्वाऽसिद्धत्वम्।

---

१ धूमरूपसाध्यव्यापकत्वमार्द्रेन्धनसंयोगस्येत्यर्थः।

२ आद्यः=केवलसाध्यव्यापकः। ३ केवलसाध्यव्यापक एव।

४ पक्षधर्मावच्छिन्नसाध्यव्यापकः।

स्तत्रार्द्रेन्धनसंयोगो नास्ति,—अयोगोलके आर्द्रेन्धनसंयोगाऽभावा'दिति साधनाऽव्यापकता ।

एवं—साध्यव्यापकत्वे सति साधनाऽव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वाऽसिद्धम् ।

### * न्यायबोधिनी *

व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात्, घटत्वादिवत्, यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारी'ति ( रीत्या ) बोध्यः । एवं प्रकारेण प्रकृताऽनुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । तथा च धूमाऽभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते, वह्नौ धूमाऽभाववदवृत्तित्वरूपव्याप्ति-ज्ञानप्रतिबन्धः फलम् ।

### * पदकृत्यम् *

मुपाधिः । तस्य—यत्र प्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वमिति न केवलसाध्यव्यापकत्वं, रूपे व्यभिचारात् । किन्तु द्रव्यत्वलक्षणो यः पक्षधर्मस्तदवच्छिन्नबहिःप्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वमिति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव । आत्मनि व्यभिचारवारणाय 'बहिः'पदम् । यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्र नोद्भूतरूपवत्त्वमिति साधनाऽव्यापकत्वं च, वायावुद्भूतरूपविरहात् ।

तृतीयो यथा—'ध्वंसो विनाशी, जन्यत्वा'दित्यत्र भावत्वमुपाधिः । तस्य यत्र विनाशित्वं तत्र भावत्वमिति न केवलसाध्यव्यापकत्वं, प्रागभावे भावत्वविरहात् । किन्तु 'जन्यत्वरूपसाधनावच्छिन्नविनाशित्वं यत्र तत्र भावत्व'मिति साधनावच्छिन्नसाध्यव्यापकत्वमेव । 'यत्र जन्यत्वं तत्र भावत्व'मिति साधनाऽव्यापकत्वं च, ध्वंसे भावत्वविरहात् ।

एवं 'स श्यामो, मित्रातनयत्वा'दित्यत्र शाकपाकजन्यत्वमुपाधिः । श्यामत्वस्य नीलघटेऽपि सत्त्वान्न केवलसाध्यव्यापकत्वं, किन्तु साधनावच्छिन्नसाध्यव्यापकत्वमेव । अष्टमे पुत्रे शाकपाकजन्यत्वविरहेण साधनाऽव्यापकत्वं चेत्यादिकमपि द्रष्टव्यम् ।

---

### * बालमनोरमा *

वह्निमत्त्वं=वह्निरूपो हेतुः ।

शाकपाकजन्यत्वं=जननीभुक्तविपुलशाकपरिपाकवशोद्भूतत्वम् ।

यस्य साध्याऽभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा 'वह्निरनुष्णो द्रव्यत्वा'दिति। अत्राऽनुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम्।

[ व्याख्यातमनुमानम् ]।

* न्यायबोधिनी *

यस्येति। यस्य=हेतोः, साध्यस्याऽभावः—साध्याऽभावः=साध्यबाधः। (स च) प्रमाणाऽन्तरेण = प्रत्यक्षादिप्रमाणेन (पक्षे) निश्चितः स बाधित इत्यर्थः। तथा च प्रात्यक्षिकसाध्यबाधितनिश्चये जाते साध्याऽनुमितिप्रतिबन्धः फलम्। बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते।

* इति न्यायबोधिन्यामनुमानपरिच्छेदः *

---

* पदकृत्यम् *

यस्येति। सद्धेतुवारणाय—'प्रमाणान्तरेणे'ति। घटादिवारणाय—'साध्ये'ति।

* इति पदकृत्यकेऽनुमानखण्डः। *

---

* बालमनोरमा *

बाधितस्य लक्षणमाह—यस्येति। अत्र बाधस्य ग्राह्याऽभावनिश्चयत्वेन, सत्प्रतिपक्षस्य च विरोधिज्ञानसामग्रीत्वेन,—साक्षादनुमितिप्रतिबन्धकत्वम्। इतरेषां तु परामर्शप्रतिबन्धकत्वम्। तत्रापि साधारणस्याऽव्यभिचाराऽभाववत्तया, विरुद्धस्य सामानाधिकरण्याऽभाववत्तया, व्याप्यत्वाऽसिद्धस्य विशिष्टव्याप्त्यभाववत्तया, असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम्। आश्रयाऽसिद्धस्वरूपाऽसिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम्। उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः। सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धेऽन्तर्भवतीति प्राञ्चः। निग्रहस्थानान्तरमिति तु—नवीनाः। इत्यनुमानपरिच्छेदः।

इति श्रीगुरुप्रसादशास्त्रिविरचितायां तर्कसंग्रहबालमनोरमायामनुमानखण्डम्।

---

* परीक्षा *

प्रश्नः—बाधितस्य हेत्वाभासस्य किं लक्षणम्?। किञ्च तदुदाहरणम्?।

उत्तरम्—प्रत्यक्षादिप्रमाणान्तरनिर्णीतसाध्याऽभावकत्वं हेतोर्बाधितत्वम्। यथा—'वह्निरनुष्णो द्रव्यत्वा'दित्यत्रानुष्णत्वरूपस्य साध्यस्याऽभावः=उष्णत्वं स्पर्शनेन्द्रियेणैव वह्नौ गृह्यते इति द्रव्यत्वस्वरूपो हेतुर्बाधित इत्युच्यते। अत्र सद्धेतुवारणाय—'प्रमाणान्तरे'ति। घटादिवारणाय—'साध्याभावे'ति।

इति श्रीगुरुप्रसादशास्त्रिसङ्कलितायां तर्कसंग्रहपरीक्षायामनुमानप्रकरणम्।

## अथ उपमानपरिच्छेदः।

उपमितिकरणमुपमानम् । सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञानमुपमितिः । तत्करणं–सादृश्यज्ञानम् । तथा हि–कश्चिद् गवयपदार्थमजानन् कुतश्चि-

*** न्यायबोधिनी ***

उपमानं लक्षयति–उपमितिकरणमिति । उपमितिं लक्षयति—सञ्ज्ञा-सञ्ज्ञीति । सञ्ज्ञा नाम-पदम् । सञ्ज्ञी–अर्थः । तयोः सम्बन्धः–शक्तिः । तथा च पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः । उपमानं नाम अतिदेशवाक्यार्थ-

*** पदकृत्यम् ***

अवसरसङ्गतिमभिप्रेत्याऽनुमानान्तरमुपमानं निरूपयति–उपमितीति । उपमितेः करणमुपमानमित्यर्थः। [1]कुठारादिवारणाय–मितीति। [2]प्रत्यक्षादिवारणाय-उपेति । सञ्ज्ञासञ्ज्ञीति । अनुमित्यादिवारणाय-सम्बन्धेति । संयोगादिवार-

---

*** बालमनोरमा ***

१ कुठारेति । 'करणमुपमान'मित्येतावदुक्तौ कुठारस्यापि छेदनादिकरणत्वा-त्तत्राऽतिव्याप्तिरस्त्येवेत्याशयः ।

२ 'मितिकरण'मित्येतावदुक्तौ प्रत्यक्षादेरपि ज्ञानादिकरणतया मितिकरणत्वा-त्तत्रातिव्याप्तिरत उपमितिकरणमित्युक्तमित्याशयः ।

[मूले–] उपमितीति । 'उपमितेः करण'मिति षष्ठीसमासः। षष्ठ्यर्थो निरूपि-तत्वम् । एवञ्च—उपमितिनिरूपितकरणत्ववदुपमानमित्यर्थः ।

[न्यायबोधिन्यां–] सञ्ज्ञा च सञ्ज्ञी च–सञ्ज्ञासञ्ज्ञिनौ, तयोः सम्बन्धः–सञ्ज्ञासञ्ज्ञिसम्बन्धः, तस्य ज्ञानमिति विग्रहः । पदपदार्थयोर्या वाच्यवाचक-भावात्मिका शक्तिस्तद्विषयको निश्चय इति च तदर्थः ।

तत्करणम्—तस्याः = उपमितेः करणम् ।

[ मूले– ] सादृश्यज्ञानं=गवादिसादृश्यावच्छिन्नविशेष्यकं गवयादिपदवा-च्यत्वप्रकारकं ज्ञानम्—'गोसदृशो गवयपदवाच्य'इत्याकारकम् ।

[ मूले– ] उपमानमुपमितिञ्च लक्ष्ये दर्शयति–तथाहीति । कश्चित् = नगरनिवासी कश्चित् पुमान् । इति=इत्याकारकमतिदेशवाक्यम् ।

---

*** परीक्षा ***

प्रश्नः—उपमानस्य किं लक्षणम् ? । तत्र उपमितिपदार्थश्च कः ? ।

उत्तरम्–उपमितिकरणत्वमुपमानत्वम् । सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञानम्–उपमितिः। पदपदार्थसम्बन्धात्मकशक्तिज्ञानमुपमितिरिति यावत्। तादृशोपमितिकरणं सादृश्यज्ञानञ्च उपमानपदार्थः । तथाहि–कश्चिन्नागरिको गवयशब्दस्यार्थमजानन् तं जिज्ञासमान-स्तज्ज्ञातुः कुतश्चिदारण्यकपुरुषात्—'गोसदृशो गवयः' इत्यतिदेशवाक्यं श्रुत्वा, वनं प्राप्तो, निरुक्तातिदेशवाक्यस्यार्थं स्मरिष्यन्, गोसदृशं मांसपिण्डं पश्यति, तदनन्तर-ञ्च–तस्य 'असौ गवयपदवाच्यः' इत्युपमितिर्भवति । अत्र च 'गोसदृशो गवयपद-वाच्यः' इत्याकारकवाक्याद्यज्ज्ञानं जायते तदुपमितिकरणतया 'उपमान'मित्युच्यते । तत्र च अतिदेशवाक्यार्थस्मरणं व्यापारः । 'असौ गवयपदवाच्यः' इति ज्ञानञ्च उपमितिरित्युच्यते ।

दारण्यकपुरुषाद् 'गोसदृशो गवय' इति श्रुत्वा वनं गतो, वाक्यार्थं [1]स्मरन्, गोसदृशं पिण्डं पश्यति, तदनन्तरम्-'[2]असौ गवयशब्दवाच्य' इत्युपमितिरुत्पद्यते । [ इत्युपमानम् ] ।

* न्यायबोधिनी *

ज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । उपमितिः फलम् । 'गोसदृशो गवयपदवाच्यः' इत्याकारकवाक्याद् गोसादृश्यावच्छिन्नविशेष्यकं गवयपदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम् । इति न्यायबोधिन्यामुपमानपरिच्छेदः ।

* पदकृत्यम् *

णाय-सञ्ज्ञासञ्ज्ञीति । असौ गवयपदवाच्य इति । अभिप्रेतो गवयो गवयपदवाच्य इत्यर्थः । 'तेन गवयान्तरे शक्तिग्रहाऽभावप्रसङ्ग' इति दूषणमपास्तम् । तथा च [3]गोसादृश्यविशिष्टपिण्डज्ञानं करणम् । अतिदेशवाक्यार्थस्मरणम्-अवान्तरव्यापारः । उपमितिः-फलमिति सारम् ।

तच्चोपमानं त्रिविधं-( १ ) सादृश्यविशिष्टपिण्डज्ञानम्, ( २ ) असाधारणधर्मविशिष्टपिण्डज्ञान, ( ३ ) वैधर्म्यविशिष्टपिण्डज्ञानञ्च । तत्राद्यमुक्तमेव । द्वितीयं यथा-'[4]खड्गमृगः कीदृ'गिति पृष्टे-'नासिका-लसदेकशृङ्गोऽनतिक्रान्तगजाकृतिश्चेति'[5] तज्ज्ञातृभ्यः श्रुत्वा, कालान्तरे तादृशं पिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति । तदनन्तरं 'खड्गमृगः खड्गमृगपदवाच्य' इत्युपमितिरुत्पद्यते । अत्र नासिकालसदेकशृङ्ग

* बालमनोरमा *

१ स्मरन्=स्मरिष्यन् । २ 'अयम्' इति पाठान्तरम् ।

३ गोसादृश्येति । गोसदृशगवयशरीरज्ञानमित्यर्थः । प्राचीनानुसारिणां पदकृत्यकृतां मते हि-गोसादृश्यविशिष्टपिण्डज्ञानमेव करणम् । मूले च 'सादृश्यज्ञान'मित्यस्य सादृश्यावच्छिन्नपिण्डज्ञानमित्यर्थः । नव्यमतमनुसरतां न्यायबोधिनीकृतां मते तु-गोसादृश्यज्ञानमेव करणं, नतु सादृश्यविशिष्टपिण्डज्ञानमिति विवेकः ।

४ खड्गमृगः—'गैंडा' इति भाषायाम् ।

५ अनतिक्रान्तेति । गजतुल्याकृतिरित्यर्थः ।

[ मूले—] वाक्यार्थम् = 'गोसदृशो गवय' इत्यतिदेशवाक्यार्थम् । स्मरन्निति । स्मरिष्यन्नित्यर्थः । इत्थञ्च अतिदेशवाक्यार्थस्मरणरूपो व्यापारो दर्शितः । पिण्डं=गवयशरीरम् । पश्यतीति । एतदेव सादृश्यज्ञानरूपमुपमानमित्यवधेयम् । असौ = गोसदृशो गवयः ।

गोसादृश्येति । गोसादृश्यावच्छिन्नगवयविशेष्यकं गवयपदवाच्यत्वप्रकारकं—'गोसदृशो गवयो गवयपदवाच्य' इत्याकारकं यज्ज्ञानं जायते, तदेव उपमितिकरणमित्यर्थः ।

[८४ पृष्ठे न्याय०]पदं=गवयादिपदम् । तयोः=सञ्ज्ञासञ्ज्ञिनोः । पदपदार्थेति । यथा 'असौ गवयपदवाच्यः' 'अयं गवयपदवाच्यः' 'अभिप्रेतो गवयो गवयपदवाच्यः' इत्यादिपदपदार्थसम्बन्धज्ञानमुपमितिरित्याशयः । अतिदेशेति । 'गोसदृशो गवयः' इत्यतिदेशवाक्येत्यर्थः । वाक्यात्=अतिदेशवाक्यात् ।

# अथ शब्दपरिच्छेदः ।

आप्तवाक्यं—शब्दः । आप्तस्तु—यथार्थवक्ता ।

* न्यायबोधिनी *

शब्दं लक्षयति—आप्तेति । आप्तोच्चरितत्वे सति, वाक्यत्वं शब्दस्य लक्षणम् । प्रमाणशब्दत्वं—लक्ष्यतावच्छेदकम् । वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत 'आप्तोच्चरितत्व' निवेशः । तावन्मात्रोक्तौ जबगडदशादावतिव्याप्तिरतो 'वाक्यत्व'म् । आप्तत्वं—च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् । तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नोऽर्थः । वस्तुतस्तु—पदज्ञानं करणम् , वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः, वाक्यार्थज्ञानं—शाब्दबोधः—फलम् ।

* पदकृत्यम् *

एव असाधारणधर्मः । तृतीयं यथा—'उष्ट्रः कीदृ'गिति पृष्टे 'अश्वादिवदसमानपृष्ठो, न ह्रस्वग्रीवशरीरश्चे'ति आप्तोक्ते, कालान्तरे तत्पिण्डदर्शनाद्वैधर्म्यविशिष्टपिण्डज्ञानं, ततोऽतिदेशवाक्यार्थस्मरणं, तत 'उष्ट्र उष्ट्रपदवाच्य' इत्युपमितिरुत्पद्यते ।

* इति पदकृत्यके उपमानखण्डः *

अवसरसङ्गतिमभिप्रेत्योपमानानन्तरं शब्दं निरूपयति—आप्तेति । शब्द इति । शब्दप्रमाणमित्यर्थः । [1]भ्रान्तविप्रलम्भकयोर्वाक्यस्य शब्दप्रमाणत्ववारणाय—'आप्ते'ति ।

ननु कोऽयमाप्त इत्यत आह—आप्तस्त्विति । यथार्थवक्ता=[2]यथाभूताऽबाधितार्थोपदेष्टा । वाक्यं लक्षयति—वाक्यमिति । घटादिसमूहवारणाय—

---

* बालमनोरमा *

[ मूले—] आप्तवाक्यम्=आप्तोच्चरितं वाक्यम् ।

प्रमाणशब्दत्वमिति । प्रत्यक्षादिप्रमाणान्तर्गतस्य चतुर्थप्रमाणभूतस्य शब्दस्य लक्षणं मूले 'आप्तोच्चरित'मित्यादिना, नतु गुणस्य शब्दस्येत्याशयः ।

जबगडेति । 'जबगडदश' इत्यस्य शिवोच्चरितत्वेनाप्तोच्चरितत्वादतिव्याप्तिरतो 'वाक्यत्व'मुपात्तम् । 'जबगडद'शिति च न वाक्यमिति न दोषः ।

प्रयोगेति । 'गामानये'त्यादिवाक्यप्रयोगे तादृशवाक्यार्थविषयकयथार्थज्ञानस्य हेतुत्वम् । 'अर्थं बुद्ध्वा वाक्यप्रयोगः' इति न्यायात् ।

[ न्याय० ] वृत्तिज्ञानेति । शक्त्यादिज्ञानेत्यर्थः । वृत्तिज्ञानसहकृता या पदजन्या पदार्थानामुपस्थितिरित्येवमन्वयः ।

१ भ्रान्तः=स्वयं भ्रान्तः । विप्रलम्भकः=स्वयमभ्रान्तोऽपि परवञ्चकः ।

२ यथाभूतः=तात्त्विकोऽबाधितश्च योऽर्थः=पदार्थस्तदुपदेष्टेत्यर्थः ।

---

* परीक्षा *

प्रश्नः—शब्दप्रमाणस्य किं लक्षणम् ? ।

उत्तरम्—आप्तोच्चरित्वे सति, वाक्यत्वं शब्दप्रमाणस्य लक्षणम् । आप्तत्वञ्च यथार्थाऽबाधितार्थाभिधायकत्वम् । वाक्यप्रयोगहेतुभूतयथार्थज्ञानशालित्वम्—आप्तत्व-

वाक्यं—पदसमूहः। यथा 'गामानये'ति। शक्तं—पदम्।
'अस्मात्पदादयमर्थो बोद्धव्य' इतीश्वरसङ्केतः—शक्तिः।

* न्यायबोधिनी *

वृत्तिर्नाम—शक्तिलक्षणाऽन्यतररूपा। शक्तिर्नाम—घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसङ्केतः।

ईश्वरसङ्केतो नाम—ईश्वरेच्छा। सैव शक्तिरित्यर्थः। शक्तिनिरूपकत्वमेव पदे शक्तत्वम्। विषयतासम्बन्धेन शक्त्याश्रयत्वम् अर्थे शक्यत्वम्।

शक्यसम्बन्धो—लक्षणा। सा द्विविधा-गौणी, शुद्धा चेति।

गौणी नाम—सादृश्यविशिष्टे लक्षणा। यथा 'सिंहो माणवक' इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा।

शुद्धा त्रिविधा—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति। लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा-जहल्लक्षणा। यथा 'गङ्गायां घोष' इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणाज्ञानाद्गङ्गापदात्तीरोपस्थितिः। लक्ष्यतावच्छेदकरूपेण लक्ष्य-शक्योभयबोध-

* पदकृत्यम् *

'पदे'ति। शक्तमिति। निरूपकतासम्बन्धेन शक्तिविशिष्टमित्यर्थः। अस्मादिति। 'घटपदाद्घटरूपोऽर्थो बोद्धव्य' इतीश्वरेच्छैव शक्तिरित्यर्थः। अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वं [1]तल्लक्षणम्।

शक्तिरिव लक्षणाऽपि पदवृत्तिः। अथ केयं लक्षणा? । उच्यते-शक्य-

* बालमनोरमा *

[न्याय०—] घटादिविशेष्यकेति। 'घटो घटपदजन्यबोधविषयो भवत्वि' त्याकारिका ईश्वरेच्छेत्यर्थः।

[न्यायबोधिन्यां—] विषयतेति। विषयतासम्बन्धेन शक्त्याश्रयश्च घटादिरूपोऽर्थः, स च शक्य इत्युच्यते—इत्याशयः।

सादृश्यविशिष्टे=सिंहसदृशे क्रूरे, शूरे च।

लक्ष्यतावच्छेदकं-तीरत्वम्। लक्ष्यं-तीरम्।

१ तल्लक्षणं=शक्तिलक्षणम्।

* परीक्षा *

मिति यावत्। यथा-आप्तोच्चरितवाक्यतया वेदस्य शब्दप्रमाणत्वम्। पदसमूहो वाक्यम्। यथा-'गामानये'ति पदसमूहो वाक्यमित्युच्यते। शक्तिमत्पदम्। यथा-गौः, पुरुषोऽश्वो, घट इति। 'अस्मात्पदादयमर्थो बोद्धव्यः' इतीश्वरसङ्केतः शक्तिः।

अत्र—(१) 'किं नाम पदत्व'मिति प्रश्ने—
शक्तिनिरूपकत्वं पदत्वम्—इत्युत्तरम्।
(२) 'शक्तेर्लक्षणं किम्?'—इति प्रश्ने च—
अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वं शक्तेर्लक्षणम्—इत्युत्तरम्।

आकाङ्क्षा, योग्यता, संनिधिश्च—वाक्यार्थज्ञाने हेतुः[1]।

पदस्य[2] पदान्तरव्यतिरेकप्रयुक्तान्वयाऽननुभावकत्वमाकाङ्क्षा।

*** न्यायबोधिनी ***

प्रयोजिका लक्षणा—अजहल्लक्षणा। यथा 'काकेभ्यो दधि रक्ष्यता'मित्यत्र काकपदस्य दध्युपघातके लक्षणा। लक्ष्यतावच्छेदकं—दध्युपघातकत्वं, तेन रूपेण दध्युपघातकानां सर्वेषां काक-बिडाल-कुक्कुट-सारमेयादीनां शक्य–लक्ष्याणां बोधात्।

जहदजहल्लक्षणा-वेदान्तिनां मते। [सा च शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका। यथा 'तत्त्वमसी' त्यत्र सर्वज्ञत्व–किञ्चिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात्]।

आकाङ्क्षां लक्षयति—पदस्येति। अव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाऽभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा। यथा 'घट'मित्यादिस्थलेऽव्यवहितोत्तरत्वाऽऽदिसम्बन्धेनाऽम्पदं घटपदवदित्याकारकाऽम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे 'घटीयं कर्मत्व'मिति बोधो जायते। 'अम्' 'घट' इति विपरीतोच्चारणे तु तादृशज्ञानाऽभावात्तादृशशाब्दबोधो न जायते, अतस्तादृशाकाङ्क्षाज्ञानं (तादृश) शाब्दबोधे

*** पदकृत्यम् ***

सम्बन्धो लक्षणा। सा च त्रिधा। जहत्–अजहत्–जहदजहद्-भेदात्। वर्तते च 'गङ्गायांघोष' इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धस्तीरे। लक्षणाबीजञ्च तात्पर्याऽनुपपत्तिः। अत एव प्रवाहे[3]घोषतात्पर्यानुपपत्तेस्तीरे लक्षणा सेत्स्यति। 'छत्रिणो यान्ती'त्यादौ द्वितीया[4]। 'सोऽयमश्व' इत्यादौ तृतीया।

---

*** बालमनोरमा ***

[१ मूले–] १ हेतुः=हेतवः। 'वेदाः प्रमाण'मितिवदेकवचनं समुदितानामेषां हेतुत्वमिति सूचनाय।

२ पदस्य = गवादिपदस्य, अस्त्यादिक्रियापदविरहप्रयुक्तार्थाऽननुभावकत्वम्–आकाङ्क्षेत्यर्थः।

३ घोषः = आभीरग्रामः। 'घोष आभीरपल्ली स्या'दित्यमरः।

४ द्वितीया = अजहल्लक्षणा।

पूर्वोक्तजहल्लक्षणाऽजहल्लक्षणातिरिक्ता जहदजहल्लक्षणाप्यस्तीति शुद्धा लक्षणा त्रिविधेत्यर्थः। क्वचिद्द्विधेत्येव पाठः।

[न्यायबोधिन्यां–] सर्वज्ञत्वेति। तत्पदार्थशक्यतावच्छेदकं सर्वज्ञत्वं, त्वम्पदशक्यतावच्छेदकं किञ्चिज्ज्ञत्वमिति विवेकः। व्यक्तीति। शुद्धचैतन्यबोधिकेत्यर्थः।

---

*** परीक्षा ***

प्रश्नः—वाक्यार्थज्ञाने को हेतुः ?।

उत्तरम्—आकाङ्क्षा योग्यता संनिधिश्च वाक्यार्थज्ञाने हेतुः।

प्रश्नः—वाक्यार्थबोधहेतुलक्षणानि, तदुदाहरणानि च निरूपय।

उत्तरम्-पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम्-आकङ्क्षा। अव्यव-

अर्थाऽबाधो—योग्यता । पदानामविलम्बेनोच्चारणं-संनिधिः ।

तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम् । यथा 'गौरश्वः पुरुषो हस्ती'ति न प्रमाणम्—आकाङ्क्षाविरहात् । 'वह्निना सिञ्चे'दिति न प्रमाणं,योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि 'गामानये'त्यादिपदानि न प्रमाणं, सांनिध्याऽभावात् ।

* न्यायबोधिनी *

कारणम् । अर्थाऽबाध इति । बाधाऽभावो योग्यतेत्यर्थः । 'अग्निना सिञ्चेत्'-इत्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः। संनिधिं निरूपयति-पदानामिति । असहोच्चारितानि-विलम्बोच्चारितानि ।

* पदकृत्यम *

असम्भववारणाय-पदान्तव्यतिरेकप्रयुक्त इति । पुनरसम्भववारणाय—पदान्तरेति । अर्थेति । आकाङ्क्षावारणाय-अर्थेति । पदानामिति । असहोच्चारितेष्वतिव्याप्तिवारणाय—'अविलम्बेने'ति । आकाङ्क्षावारणाय-पदानामिति । आकाङ्क्षादिशून्यवाक्यस्याऽत्र प्रमाणत्वं निषेधति—तथा चेति । 'आकाङ्क्षादिकं शाब्दहेतु'रित्युक्ते चेत्यर्थः । आकाङ्क्षाद्युदाहरणं दर्शयति-यथेति ।

* बालमनोरमा *

[ मूले- ] अर्थस्य = सेककरणत्वादिरूपस्य, अबाधः=बाधाऽभावो जलादौ सेचनयोग्यतेत्यर्थः ।

यत्पदे = अम्पदादौ । यत्पदप्रकारकेति । घटपदप्रकारकेत्यर्थः ।

[ न्यायबोधिन्यां- ] तादृशवाक्यात्='अग्निना सिञ्चे'दित्यादिवाक्यात् ।

* परीक्षा *

हितोत्तरत्वादिसम्बन्धेन यत्पदे यत्पदविरहप्रयोज्ययादृशशाब्दबोधजनकत्वाऽभाववत्त्वं तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षालक्षणमिति यावत् । यथा 'घट'मित्यत्र—'अव्यवहितोत्तरत्वसम्बन्धेन अम्पदं घटपदव'दित्याकारकाऽम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वदशायां 'घटीयं कर्मत्व'मित्याकारकः शाब्दबोधो जायते। 'अम्-घट' इति विपरीतोच्चारणे तु 'अव्यवहितोत्तरत्वसम्बन्धेनाऽम्पदं घटपदव'दित्याकारक-निरुक्तज्ञानविरहाद्घटीयं कर्मत्वमिति शाब्दबोधो न जायते अतो 'घटीयं कर्मत्व'-मिति शाब्दबोधे 'अव्यवहितोत्तरत्वसम्बन्धेन अम्पदं घटपदव'दित्याकारकमाकाङ्क्षाज्ञानं कारणम् । 'गौरश्वः, पुरुषो, हस्ती, शकुनिर्मृगो, ब्राह्मणः' इत्यादि-वाक्यात्तु न शाब्दबोधः; आकाङ्क्षाया तत्र अभावात् । ईदृशं वाक्यञ्च न प्रमाणम्, आकाङ्क्षाविरहादेव ।

अर्थाऽबाधो—योग्यता । एकपदार्थेऽपरपदार्थाऽभावाऽभाववत्त्वं योग्यतेति तदर्थः । यथा 'जलेन सिञ्चती'त्यत्र सेककरणत्वस्य जले बाधाऽभावाज्जलकरणकसेचनकर्त्तेति शाब्दबोध उत्पद्यते, जलपदार्थे सेककरणत्वरूपाऽपरपदार्थाऽभावाऽभावान्निरुक्तयोग्यतायाः सत्त्वात् । 'अग्निना सिञ्चती'त्यत्र तु सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयस्य सत्त्वान्न 'वह्निना सिञ्चती'ति वाक्याच्छाब्दबोधः । योग्यताविरहाच्च न तद्वाक्यं प्रमाणम् ।

पदानामविलम्बेनोच्चारणं—संनिधिः । यथा 'गामानय' 'अश्वं बधान' 'ग्रामं

वाक्यं—द्विविधम्। वैदिकं, लौकिकं च।
वैदिकम्-ईश्वरोक्तत्वात्सर्वमेव प्रमाणम्।
लौकिकं त्वाप्तोक्तं प्रमाणम्। [1]अन्यदप्रमाणम्।
[2]वाक्यार्थज्ञानं—शाब्दज्ञानम्। तत्करणं—शब्दः।

* न्यायबोधिनी *

वैदिकमिति। वेदवाक्यमित्यर्थः। [3]इदमुपलक्षणं,—वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि। लौकिकन्त्विति। वेदवाक्यभिन्नमित्यर्थः। आप्तत्वं च [4]प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्। * इति न्यायबोधिन्यां शब्दपरिच्छेदः *

* पदकृत्यम् *

नन्वेतावता [5]शाब्दसामग्री प्रपञ्चिता। [6]प्रमाविभाजकवाक्ये शाब्दस्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितमित्यत आह—वाक्यार्थेति। शाब्दत्वं च 'शब्दात्प्रत्येमी'त्यनुभवसिद्धा जातिः।
शाब्दबोधक्रमो [7]यथा—'चैत्रो ग्रामं गच्छती'त्यत्र ग्रामकर्मकगमनानुकूल-

* बालमनोरमा *

१ अन्यत्=अनाप्तोक्तं वाक्यं, भ्रान्ति-विप्रलम्भादिदोषदूषितम्।
२ शाब्दबोधं निरूपयति- वाक्यार्थेति। तत्करणं = शाब्दबोधकरणम्। मूले-'वाक्यार्थज्ञान'मित्यस्य विवरणं-'शाब्दज्ञानम्' इति।
३ इदं = वैदिकपदम्। ग्राह्याणि=वैदिकपदेन ग्राह्याणि।
४ प्रयोगेति = अर्थबोधनायैव शब्दानां प्रयोगेण अर्थज्ञानस्य प्रयोगहेतुत्वमित्याशयः।
५ शाब्दसामग्री=आकाङ्क्षादिरूपा शाब्दबोधसामग्री, न तु शाब्दबोधः।
६ 'प्रत्यक्षानुमित्युपमितिशाब्दभेदा'दिति प्रमाविभाजकवाक्ये।
७ शिष्यधीवैशद्याय शाब्दबोधमभिनीय दर्शयति—यथेति।

* परीक्षा *

गच्छे'त्यादौ द्वितीयान्तगवादिपदोत्तरानयादिपदानामविलम्बेनोच्चरिततया संनिधेः सत्त्वाच्छाब्दबोध उत्पद्यते। प्रहरादिविलम्बेनोच्चारितेभ्यो 'गाम्—आनये'त्यादिपदेभ्यश्च न शाब्दबोधः, संनिधेरभावात्। तथा च प्रहरादिविलम्बेनोच्चारितानि 'गामानये'त्यादिपदानि न प्रमाणं, सांनिध्याऽभावात्।

प्रश्नः—वाक्यं कतिविधम्?।

उत्तरम्—वाक्यं द्विविधं, वैदिकं लौकिकञ्च। तत्र ईश्वरोक्तं वैदिकं वाक्यम्—'उदिते जुहोती'त्यादि। तच्च ईश्वरोक्तत्वात्सर्वमेव प्रमाणम्। लौकिकं—वाक्यं—'गामानये'त्यादि। तच्च आप्तोक्तमेव प्रमाणम्। अनाप्तोच्चरितं वाक्यन्तु न प्रमाणम्।

तत्र-वैदिकं वाक्यत्वञ्च-ईश्वरोच्चरितत्वे सति, वाक्यत्वम्। लौकिकवाक्यत्वञ्च-आप्तोच्चरितत्वे सति, वाक्यत्वम्।

प्रश्नः—शाब्दबोधपदार्थः कः?। शाब्दबोधस्य करणं किम्?।

उत्तरम्—वाक्यार्थविषयकं ज्ञानं शाब्दबोधः। स च 'चैत्रो ग्रामं गच्छती'त्यादौ

अयथार्थाऽनुभवस्त्रिविधः, संशय-विपर्यय-तर्कभेदात् ।

एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः ।

* न्यायबोधिनी *

यथार्थानुभवं [1]निरूप्याऽयथार्थानुभव विभजते—एकेति । एकधर्मावच्छिन्न-विशेष्यतानिरूपितभावाऽभाव[2]प्रकारकज्ञानं संशय इत्यर्थः । भावद्वयकोटिक-संशयाऽप्रसिद्धेः 'स्थाणुर्वे'त्यत्र स्थाणुत्व-स्थाणुत्वाऽभाव-पुरुषत्व-पुरुषत्वाऽभाव-कोटिक एव संशय इत्यर्थः ।

* पदकृत्यम् *

वर्त्तमानकृतिमांश्चैत्र इति शाब्दबोधः । [3]द्वितीयायाः कर्मत्वमर्थः । धातोर्गमनम् । अनुकूलत्वं च संसर्गमर्यादया भासते । लटो वर्त्तमानत्वम्, [4]आख्यातस्य कृतिः । तत्सम्बन्धः—संसर्गमर्यादया भासते । 'रथो गच्छती'त्यत्र गमनाऽनुकूलव्यापार-वान् रथ इति शाब्दबोधः । 'स्नात्वा गच्छती'त्यत्र गमनप्रागभावावच्छिन्नकालीन-स्नानकर्ता गमनानुकूलवर्त्तमानकृतिमानिति शाब्दबोधः । क्त्वाप्रत्ययस्य कर्ता, पूर्वकालीनत्वं चाऽर्थः । एवमन्यत्रापि वाक्यार्थो बोध्यः ।

* इति पदकृत्ये शाब्दपरिच्छेदः *

अयथार्थानुभवं विभजते—अयथार्थेति । संशयं लक्षयति—एकस्मिन्निति । एकस्मिन्धर्मिणि=एकस्मिन्नेव पुरोवर्त्तिनि [5]पदार्थे विरुद्धाः=व्यधिकरणा ये नाना-धर्माः-स्थाणुत्व—पुरुषत्वादयस्तेषां वैशिष्ट्यं=सम्बन्धः, तदवगाहि ज्ञानं संशय इत्यर्थः । 'घट-पटा'विति समूहालम्बनज्ञानस्य घटत्व-पटत्वरूपविरुद्धनानाधर्म-वैशिष्ट्यावगाहित्वादतिप्रसक्तिवारणाय[6]—'एकस्मि'न्निति । [7]'घटः—पृथिवी'ति

* बालमनोरमा *

१ निरूप्येति । प्रत्यक्षानुमित्युपमितिशाब्दभेदेन चतुर्विधं यथार्थानुभवं निरूप्येत्यर्थः ।

२ 'विरुद्धनानाधर्मे'त्यस्यार्थमाह—भावाऽभावेति ।

३ ईदृशार्थलाभोपायं दर्शयति—द्वितीयाया इति । धातोः=गम्धातोः ।

४ आख्यातस्य=तिङादेः । तत्सम्बन्धः=अनुकूलत्वम् ।

५ पुरोवर्त्तिनि—नेत्रसंमुखे स्थाण्वादौ ।

६ तत्र संशयलक्षणातिव्याप्तिनिरासाय । ७ विरुद्धेति । तथोक्तौ तु-घटत्वं, पृथिवीत्वञ्च न परस्परं विरुद्धमिति तत्र नाऽतिव्याप्तिरित्याशयः ।

* परीक्षा *

ग्रामकर्मकगमनानुकूलवर्त्तमानकृतिमांश्चैत्र इत्याकारको बोध्यः । तादृशशाब्दबोध-करणञ्च शब्दः । स्मरणञ्च तत्र व्यापारः ।

प्रश्नः—अयथार्थाऽनुभवः कतिविधः ? ।

उत्तरम्—अयथार्थानुभवः त्रिविधः, संशय—विपर्यय-तर्कभेदात् ।

प्रश्नः—संशयस्य किं लक्षणं, किञ्च तदुदाहरणम् ।

उत्तरम्—एकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मप्रकारताकं ज्ञानं संशयः, तत्त्वञ्च संशयस्य लक्षणम् । यथा 'स्थाणुर्वा, पुरुषो वे'त्यत्र एकस्मिन्पुरो-

यथा। 'स्थाणुर्वा पुरुषो वे'ति।

मिथ्याज्ञानं—विपर्ययः। यथा शुक्तौ—'रजतम्' इति।

[1]व्याप्याऽऽरोपेण व्यापकाऽऽरोपस्तर्कः। यथा—'यदि वह्निर्न स्या-

* न्यायबोधिनी *

मिथ्याज्ञानमिति। अयथार्थज्ञानमित्यर्थः। विपर्ययो नाम-भ्रमः।

व्याप्यारोपेणेति। तर्के [2]व्याप्यस्य, व्यापकस्य च बाधनिश्चयः कारणं,

* पदकृत्यम् *

ज्ञानस्यैकस्मिन्-धर्मिणि घटे घटत्व-पृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वाद-तिप्रसङ्गवारणाय-'विरुद्धे'ति। 'पटत्वविरुद्धघटत्ववान्[3] घट' इति ज्ञानेऽतिप्रसक्ति-वारणाय 'नाने'ति।

मिथ्येति। यथार्थज्ञानवारणाय-मिथ्येति। [4]अयथार्थवारणाय-ज्ञानेति।

तर्कं लक्षयति-व्याप्यारोपेणेति। असम्भववारणाय 'व्याप्यारोपेणे'ति।

* बालमनोरमा *

१ व्याप्यस्य=प्रकृते-वह्न्यभावस्य। आरोपेण—बाधकालीनेच्छाजन्येन आहार्यज्ञानेन। व्यापकस्य = धूमाऽभावस्य, आरोपः=आहार्यज्ञानं-तर्क इत्यर्थः।

यथा-'यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्या'दित्यत्र वह्न्यभावस्य व्याप्यस्या-ऽऽरोपेण व्यापकस्य धूमाऽभावस्यारोपः क्रियते इति तत्र लक्षणसमन्वयः। तदेवम् आहार्यव्याप्यवत्ताभ्रमजन्याऽऽहार्यव्यापकवत्ताभ्रमत्वं तर्कस्य लक्षणम्। व्याप्य-भ्रमः='यदि वह्न्यभाववान् स्या'दिति। तज्जन्यो व्यापकभ्रमः='तदा धूमा-ऽभाववान् स्या'दिति।

तर्कश्चाऽयमप्रयोजकत्वशङ्कानिवृत्तये आवश्यकः। अन्यथा-'पर्वते धूमोऽस्तु, वह्निर्मास्तु'इत्यप्रयोजकत्वशङ्कया धूमेन वह्नेरनुमितिर्न स्यात्। तथा च वह्नि-धूमयोः कार्यकारणभावभङ्गप्रसङ्गः। तदेवं 'यदि वह्निर्न स्यात्तदा धूमोऽपि न स्या'दित्ययं तर्कोऽप्रयोजकत्वशङ्कां निराकरोतीत्यवधेयम्।

२ व्याप्यस्य=वह्न्यभावस्य। व्यापकस्य = धूमाऽभावस्य। बाधनिश्चयः= अभावनिश्चयः। अन्यथा=अभावनिश्चयाऽभावे।

३ पटत्वविरुद्धेति। अत्र घटत्वसम्बन्धस्यैव घटे बोधनान्न नानाधर्मवैशि-ष्ट्यावगाहिता प्रकृतज्ञानस्येति नाऽतिव्याप्तिः।

४ अयथार्थपदार्थेऽतिव्याप्तिवारणाय।

* परीक्षा *

वर्त्तिपदार्थरूपे धर्मिणि विरुद्ध-स्थाणुत्व-पुरुषत्वादिनानाधर्मसम्बन्धावगाहनात् 'स्थाणुर्वा, पुरुषो वे'ति ज्ञानं 'संशय' इत्युच्यते। समूहालम्बनेऽतिव्याप्तिवारणाय 'एकस्मि'न्निति। 'घटो द्रव्य'मितिज्ञानेऽतिव्याप्तिवारणाय-'विरुद्धे'ति। 'पटत्व-विरुद्धघटत्वविशिष्टो घट'इत्यत्रातिव्याप्तिनिरासाय-'नाने'ति।

प्रश्नः—विपर्ययस्य किं लक्षणम्?। किञ्चोदाहरणम्?।

त्तर्हि धूमोऽपि न स्या'दिति ।

स्मृतिरपि द्विविधा । यथार्था, अयथार्था च ।

प्रमाजन्या-यथार्था, अप्रमाजन्या-अयथार्था ।

सर्वेषामनुकूलवेदनीयं-सुखम् ।

*** न्यायबोधिनी ***

अन्यथा [1]बाधनिश्चयाऽभावे इष्टापत्तिदोषेण तर्काऽनुत्पत्तेः ।

सुखं निरूपयति—सर्वेषामिति । इतरेच्छा-ऽनधीनेच्छा-विषयत्वमिति

*** पदकृत्यम् ***

पुनरसम्भववारणाय—'व्यापकारोप' इति । अत्र वह्न्यभावो—व्याप्यः धूमाऽभावो-व्यापकः। यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः[2], तथापि प्रमाणाऽनुग्राहकत्वात् स उदित इति बोध्यम् ।

स्वप्नस्तु-पुरीतद्बहिर्देशान्तर्देशयोः सन्धौ, इडानाड्यां वा मनसि स्थितेऽदृष्टविशेषेण, धातुदोषेण वा जन्यते । स च मानसविपर्ययान्तर्भूतः[3] ।

सुखं निरूपयति-सर्वेषामिति । सर्वात्मनामनुकूलमिति वेद्यं यत्तत्सुख-

*** बालमनोरमा ***

१ बाधनिश्चयाऽभावे=व्याप्यव्यापकयोर्बाधनिश्चयाऽभावे । इष्टापत्तिदोषेण = 'धूमोऽपि माऽस्तु'इत्येवमिष्टापत्त्या । २ विपर्ययात्पृथग्विभागोऽनुचितः ।

३ 'अतो न पृथगुक्त' इति शेषः ।

*** परीक्षा ***

उत्तरम्-अयथार्थत्वे सति ज्ञानत्वं विपर्ययत्वम् । यथार्थज्ञानवारणाय-सत्यन्तम् । अयथार्थवारणाय-'ज्ञाने'ति । 'तदभाववति तत्प्रकारकनिश्चयत्वं विपर्ययत्व'मिति तु तत्त्वम् । यथा-शुक्तौ 'इदं रजत'मिति ज्ञानं विपर्यय इत्युच्यते । विपर्ययश्च-भ्रमः ।

प्रश्नः—तर्कस्य किं लक्षणं, किञ्चोदाहरणम् ।

उत्तरम्—आहार्यव्याप्यवत्ताज्ञानजन्याऽऽहार्यव्यापकवत्ताभ्रमत्वं तर्कस्य लक्षणम् । उदाहरणं यथा—'यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्या'दिति । अत्रहि-व्याप्यस्य वह्न्यभावस्याऽऽरोपेण व्यापकस्य=धूमाऽभावस्याऽऽहार्यज्ञानमिति तर्कलक्षणसमन्वयः ।

प्रश्नः—स्मृतिः कतिविधा ? ।

उत्तरम्-स्मृतिर्द्विविधा-यथार्था, अयथार्था चेति । तत्र प्रमाजन्या यथार्था स्मृतिः। अप्रमाजन्या-अयथार्था स्मृतिः । एवञ्च 'प्रमाजन्यत्वे सति स्मृतित्वं'-यथार्थस्मृतेर्लक्षणम् । 'अप्रमाजन्यत्वे सति स्मृतित्वञ्च अयथार्थस्मृतित्व'मित्यवधेयम् ।

प्रतिकूलवेदनीयं—दुःखम् ।

### * न्यायबोधिनी *

[१]निष्कर्षः । [२]यथाश्रुते' घटोऽनुकूल' इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिरिति निष्कृष्टलक्षणमुक्तम् ।

सुखेच्छाधीने [३]भोजनादावतिव्याप्तिवारणाय 'इतरेच्छानधीने'तीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ।

दुःखं निरूपयति—प्रतिकूलेति । अत्राऽपीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कृष्टलक्षणम् । 'द्वेषविषयत्व'मात्रोक्तौ सर्पादावतिव्याप्तिः, तत्रापि द्वेषविषयत्वसत्त्वात्, अतस्तत्राऽतिव्याप्तिवारणाय—'इतरद्वेषानधीने'ति द्वेषविशेषणम् । सर्पजन्यदुःखादौ[४] द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषजन्यद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नाऽतिव्याप्तिः। [५]फलेच्छा—

### * पदकृत्यम् *

मित्यर्थः । 'अहं सुखी'त्यनुभवसिद्ध सुखत्वजातिमत्, धर्ममात्राऽसाधारणकारणो गुणो वा सुखम् । शत्रुदुःखवारणाय 'सर्वेषा'मिति ।

प्रतिकूलेति । दुःखत्वजातिमत्, अधर्ममात्राऽसाधारणकारणो गुणो वा

---

### * बालमनोरमा *

१ निष्कर्षः=निष्कृष्टं सुखस्य लक्षणम् ।

२ यथाश्रुते='अनुकूलवेदनीयत्व'मिति मूलोक्ते सुखलक्षणे तु 'घटोऽनुकूल' इति ज्ञानदशायाम्—अनुकूलत्वप्रकारकवेदनाविशेष्यत्वरूपानुकूलवेदनीयत्वस्य घटे सत्त्वात्तत्र सुखलक्षणाऽतिव्याप्तिरत 'इतरेच्छानधीनेच्छे'त्यादिलक्षणान्तरमास्थेयमित्याशयः ।

३ भोजनेच्छायास्तु तृप्त्यादीच्छाऽधीनत्वान्न तथोक्तौ तत्रातिव्याप्तिरिति भावः।

४ तथा विशेषणेन सर्पेऽतिव्याप्तिं निराकरोति—सर्पजन्येति ।

५ फलेच्छा=स्वर्गादिसुखेच्छा। उपायेच्छा=योगयागादिविषयिणीमिच्छां प्रति

---

### * परीक्षा *

प्रश्नः—सुखस्य किं लक्षणम् ? ।

उत्तरम्—सर्वेषामनुकूलवेदनीयं सुखम् । एवञ्च—सर्वात्मसमवेताऽनुकूलत्वप्रकारकज्ञान—विषयत्वं सुखस्य लक्षणं निष्पन्नम् । परे तु—इतरेच्छानधीनेच्छाविषयत्वं, सुखत्वजातिमत्त्वं वा सुखत्वमित्याहुः ।

प्रश्नः—दुःखस्य किं लक्षणम् ? ।

उत्तरम्—सर्वात्मसमवेत—प्रतिकूलत्वप्रकारकज्ञानविषयत्वं दुःखस्य लक्षणम् । परे तु—इतरद्वेषानधीनद्वेषविषयत्वं, दुःखत्वजातित्वं वा दुःखस्य लक्षणमित्याहुः ।

इच्छा-कामः । क्रोधो-द्वेषः । कृतिः-प्रयत्नः ।
विहितकर्मजन्यो[1] धर्मः । निषिद्धकर्मजन्यस्त्वधर्मः[2] ।

* न्यायबोधिनी *

उपायेच्छां प्रति करणम्, अतः फलेच्छावशादुपायेच्छा भवति । एवं फले द्वेषादुपाये द्वेषः ।

धर्माऽधर्मौ निरूपयति—विहितेति । वेदविहितेत्यर्थः ।

निषिद्धेति । वेदनिषिद्धेत्यर्थः ।

* पदकृत्यम् *

दुःखम् । पदकृत्यं पूर्ववत् ।

इच्छां निरूपयति–इच्छेति । 'काम'इति पर्यायः । इच्छात्वजातिमती इच्छा । सा द्विविधा–फलेच्छा, उपायेच्छा च । फलं–सुखादिकम् । उपायो–यागादिः ।

द्वेषं निरूपयति—क्रोध इति । 'द्वेष्मी'त्यनुभवसिद्धद्वेषत्वजातिमान्, द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः ।

प्रयत्नं निरूपयति—कृतिरिति । प्रयत्नत्वजातिमान्प्रयत्नः । स त्रिविधः, प्रवृत्ति-निवृत्ति-जीवनयोनि-भेदात् । इच्छाजन्यो गुणः-प्रवृत्तिः । द्वेषजन्यो गुणो निवृत्तिः । जीवनाऽदृष्टजन्यो गुणो-जीवनयोनिः । [3] स च प्राणसञ्चारकारणम् ।

धर्ममाह—विहितेति । वेदविहितेत्यर्थः । अधर्मवारणाय–वेदविहितेति । यागादिक्रियावारणाय-कर्मजन्य इति । स च कर्मनाशाजलस्पर्श-कीर्तन-भोग-तत्त्वज्ञानादिना नश्यति । अधर्मलक्षणमाह–निषिद्धेति । वेदेनेत्यर्थः । धर्मवारणाय

* बालमनोरमा *

१ वेदोक्तयागादिकर्मजन्यो धर्म इत्यर्थः । २ श्रुतिस्मृतिनिषिद्धहिंसादिकर्मजन्योऽधर्म इत्यर्थः । ३ स च=जीवनयोनिः प्रयत्नश्च ।

* परीक्षा *

प्रश्नः—इच्छायाः किं लक्षणम् ? ।

उत्तरम्-इच्छात्वजातिमत्त्वम्-इच्छाया लक्षणम् । इच्छा काम इति पर्यायशब्दौ ।

प्रश्नः—द्वेषस्य किं लक्षणम् ? ।

उत्तरम्—द्वेष्मीत्यनुभवसिद्धद्वेषत्वजातिमत्त्वं द्वेषलक्षणम् ।

प्रश्नः—प्रयत्नस्य किं लक्षणम् ? ।

उत्तरम्—प्रयत्नत्वजातिमत्त्वे सति, गुणत्वं प्रयत्नस्य लक्षणम् ।

प्रश्नः—धर्मस्य किं लक्षणम् ? ।

उत्तरम्—वेदबोधितकर्मजन्यत्वे सति, गुणत्वं धर्मत्वम् ।

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या, अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ।

संस्कारस्त्रिविधः । वेगो, भावना, स्थितिस्थापकश्चेति । वेगः—

*** न्यायबोधिनी ***

बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मा इत्यर्थः । संस्कारं विभजते—**संस्कार इति** ।

*** पदकृत्यम् ***

वेदनिषिद्धेति । वेदनिषिद्धक्रियावारणाय–धर्मजन्य इति । स च भोग-प्रायश्चित्ता-दिना नश्यति । एतावेव 'अदृष्ट'मिति कथ्येते, वासनाजन्यौ च । वासना च विलक्षणः संस्कारः ।

संस्कारं विभजते-संस्कारेति । सामान्यगुणा-ऽऽत्मविशेषगुणो-भयवृत्तिगुणत्व-

---

*** परीक्षा ***

प्रश्नः—अधर्मस्य किं लक्षणम् ? ।

उत्तरम्—श्रुतिस्मृतिनिषिद्धकर्मजन्यत्वे सति, गुणत्वम्–अधर्मत्वम् ।

प्रश्नः—आत्ममात्रविशेषगुणाः के ? ।

उत्तरम्—बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्मा अष्टावात्मविशेषगुणाः । तत्र-बुद्धीच्छाप्रयत्ना द्विविधाः,नित्या अनित्याश्च । नित्या ईश्वरस्य,अनित्या जीवस्य ।

प्रश्नः—संस्कारः कतिविधः ? ।

उत्तरम्—संस्कारः त्रिविधः-वेग-भावना-स्थितिस्थापकभेदात् ।

प्रश्नः—वेगः कुत्र वर्त्तते ? ।

उत्तरम्—वेगाख्यः संस्कारः—पृथिवी–जल–तेजो–मनो–मात्रवृत्तिः ।

प्रश्नः—भावनायाः किं लक्षणम् ? । सा च कुत्र वर्त्तते ? ।

उत्तरम्—अनुभवजन्यत्वे सति, स्मृतिहेतुत्वं भावनाया लक्षणम् । आत्ममनः-संयोगेऽतिव्याप्तिवारणाय सत्यन्तम् । अनुभवध्वंसेऽतिव्याप्तिवारणाय विशेष्य-दलम् । सा च भावना-आत्ममात्रवृत्तिः ।

प्रश्नः—स्थितिस्थापकस्य किं लक्षणम् ? । कुत्र च स तिष्ठति ? ।

उत्तरम्—अन्यथाकृतस्य पुनस्तदवस्थापकः संस्कारः स्थितिस्थापकः । एवञ्च-

पृथिव्यादिचतुष्टयमनोवृत्तिः ।

अनुभवजन्या स्मृतिहेतुर्भावना,-आत्ममात्रवृत्तिः ।

* न्यायबोधिनी *

भावनां लक्षयति—अनुभवेति । अनुभवजन्यत्वे सति, स्मृतिहेतुत्वं भावनाया लक्षणम् । अत्र 'अनुभवजन्यत्वे सती'ति विशेषणाऽनुपादाने-आत्ममनःसंयोगेऽतिव्याप्तिः, आत्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन, स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम् । आत्ममनःसंयोगस्याऽनुभवजन्यत्वाऽभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वेन अनुभवध्वंसस्याप्यनुभवजन्यत्वात्, अतः स्मृतिहेतुत्वोपादानम् । अनुभवध्वंसे स्मृतिहेतुत्वाऽभावान्नाऽतिव्याप्तिः ।

[ ननु[1] विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा, यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानं कारणम् । दण्डविशिष्टबुद्धिर्नाम—दण्डप्रकारकबुद्धिः । तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापतितम् । दण्डप्रकारकबुद्धिः 'दण्डी पुरुष' इत्याकारिका बुद्धिस्तत्र दण्डज्ञानं कारणम् । न हि दण्डमजानानः पुमान् 'दण्डी पुरुष' इति प्रत्येति ।

एवं च यत्रा'ऽयं दण्ड' इति प्रत्यक्षं जात,तदनन्तरं 'दण्डी पुरुष' इत्याकारकप्रत्यक्षमुत्पन्नं, तत्र 'दण्डी पुरुष' इत्याकारकप्रत्यक्षेऽतिव्याप्तिः । तद्धि [2]स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं, जनिष्यमाणे 'दण्डी[3] पुरुष' इत्या-

* पदकृत्यम् *

व्याप्यजातिमान्संस्कारः । घटादिवारणाय-गुणत्वव्याप्येति । संयोगादिवारणाय आत्मविशेषगुणोभयवृत्तीति । ज्ञानादिवारणाय-सामान्येति । द्वितीयादिपतनाऽसमवायिकरणं वेगः । रूपादिवारणाय—द्वितीयादिपतनेति । कालादिवारणाय-असमवायीति । भावनां लक्षयति—अनुभवेति । आत्मादिवारणाय प्रथमदलम् । अनुभवध्वंसवारणाय द्वितीयदलम् ।

* बालमनोरमा *

१ एतदन्तर्गतो ग्रन्थः क्वाचित्कः ।

२ स्वं='दण्डी पुरुष' इति प्रत्यक्षम् ।

३ 'दण्डी पुरुष' इति प्रत्यक्षजन्ये 'दण्डी पुरुषः' इति स्मरणे ।

* परीक्षा *

प्रकृतावस्थाभिन्नाऽवस्थापादकव्यापारानुकूलकृतिविषयवस्तुनिष्ठप्रकृतावस्थापादकत्वं स्थितिस्थापकत्वमिति पर्यवसन्नम् । स च कटादिरूपपृथिवीमात्रवृत्तिः ।

प्रश्नः—संस्कारस्य किं लक्षणम् ? ।

उत्तरम्—सामान्यगुणा-ऽऽत्मविशेषगुणो-भयवृत्तिगुणत्वव्याप्यजातिमत्त्वं संस्कारत्वम् ।

अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः। इति गुणाः।

### * न्यायबोधिनी *

कारकस्मरणे कारणं च, स्मृतिं प्रत्यनुभवस्य कारणत्वात्। तथा चाऽनुभवजन्यत्वे सति स्मृतिहेतुत्वरूपभावनालक्षणस्य यथोक्त- दण्डी पुरुष' इत्याकारकाऽनुभवे विद्यमानत्वादतिव्याप्तिरिति चेत्,—अत्र ब्रूमः-अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम्। तत्र कारणतायामनुभवत्वावच्छिन्नत्वं निवेश्यते। तथा चाऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताऽऽश्रयत्वमनुभवजन्यत्वमिति फलितम्, अतो नोक्तातिव्याप्तिः। तथा हि- दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञाननिष्ठा या कारणता, तस्यां न दण्डानुभवत्वमवच्छेदकं, दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः। अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति अनुभवस्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात्। तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः[१]। भावनायां

### * पदकृत्यम् *

स्थितिस्थापकमाह— अन्यथेति। पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकत्वम्। गन्धत्वमादाय गन्धेऽतिव्याप्तिवारणाय—संस्कारत्वव्याप्येति। भावनात्वमादाय भावनावारणाय—पृथिवीसमवेतेति। स्थितिस्थापकरूपाऽन्यतरत्वमादाय रूपवारणाय-जातीति।

इति गुणा इति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः।

---

### * बालमनोरमा *

१ 'दण्डी पुरुष' इति प्रत्यक्षे।

---

### * परीक्षा *

**प्रश्नः**—स्थितिस्थापकस्य किं लक्षणम्?।

**उत्तरम्**—पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकत्वम्।

**प्रश्नः**—गुणस्य किं लक्षणम्?।

**उत्तरम्**— द्रव्यकर्मभिन्नत्वे सति, सामान्यवत्त्वं गुणत्वम्।

चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोग-

* न्यायबोधिनी *

तु लक्षणमिदं वर्त्तते । तथा हि—अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवत्वेनैव कारणतया,—भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम् ,—अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं भावनायां वर्त्तते इति नाऽसम्भवः ।

नन्वेवं 'स्मृतिहेतुत्व'—विशेषणवैयर्थ्यम् . तद्धि अनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम् । न हि यथोक्ताऽनुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते । तथा हि,—ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंस-प्रतियोगिनोः कार्यकारणभावः । तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता, तस्यां प्रतियोगित्वमवच्छेदकं, तत्तद्व्यक्तित्वं च, न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपाऽनुभव—जन्यत्वविरहेणैवाऽतिव्याप्तिवारणसम्भवात्कृतं स्मृतिहेतुत्वविशेषणेनेति चेन्न ।

स्मृतावतिव्याप्तिवारणायैव तदुपादानात् । तथाहि—स्मृतिं प्रत्यनुभव एव कारणं, न तु स्मृतिरपि, अतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं, न तु घटज्ञानत्वेन । तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता, तस्यां घटानुभवत्वमवच्छेदकम् । तेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिवारणाय स्मृति-

* पदकृत्यम् *

द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम् । सामान्यादावव्याप्तिवारणाय विशेष्यदलम् ।

चलनेति । संयोगभिन्नत्वे सति, संयोगाऽसमवायिकारणं कर्म । हस्तपुस्तकसंयोगवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् । ऊर्ध्वेति । अपक्षेपण-

* परीक्षा *

प्रश्नः—कर्मणः किं लक्षणं ? कतिविधञ्च तत्कर्म ? किञ्च तल्लक्षणम् ? ।

उत्तरम्—संयोगभिन्नत्वे सति, संयोगाऽसमवायिकारणत्वं कर्मत्वम् । देवदत्त-

हेतुरपक्षेपणम् । शरीरस्य संनिकृष्टसंयोगहेतुराकुञ्चनम् ।
विप्रकृष्टसंयोगहेतुः प्रसारणम् अन्यत्सर्वं गमनम् ।
नित्यमेकमनेकाऽनुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति ।
परं—सत्ता । अपरं—द्रव्यत्वादि ।

* न्यायबोधिनी *

हेतुत्वमुक्तम् । नहि स्मृतिर्हेतुरतो न तत्राऽतिव्याप्तिरित्यलं पल्लवतल्लजकल्पेष्वनल्पजल्पनेन ] ।

सामान्यं निरूपयति—नित्यमेकमिति । नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम् । 'नित्यत्व'विशेषणानुपादानेऽनेकसमवेतत्वस्य संयोगादौ सत्त्वात्तत्राऽतिव्याप्तिरतस्तद्वारणाय 'नित्यत्व'विशेषणम् । 'अनेकसमवेतत्वा'ऽनुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्तिस्तद्वारणायाऽनेकसमवेतत्वम् । 'अनेकसमवेतत्वा'-

* पदकृत्यम् *

वारणाय—ऊर्ध्वेति । कालादिवारणाय असाधारणेत्यपि बोद्धव्यम् । अधोदेशेति । उत्क्षेपणवारणाय—अधोदेशेति । कालादिवारणाय—असाधारणेत्यपि देयम् ।

शरीरेति प्रसारणादिवारणाय—शरीरसंनिकृष्टेति । कालादिवारणाय असाधारणं देयम् । विप्रकृष्टेति । उत्क्षेपणादिवारणाय—विप्रकृष्टेति । कालादिवारणाय असाधारणपदमप्यावश्यकम् ।

नित्यमिति । संयोगादिवारणाय—नित्यमिति । कालादिपरिमाणवारणाय

---

* परीक्षा *

पुस्तकसंयोगे हस्तपुस्तकसंयोगस्याप्यसमवायिकारणतया तत्राऽतिव्याप्तिनिरासाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् । रूपादिवारणाय—संयोगेति ।

तच्च कर्म उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात्पञ्चविधम् । तत्र ऊर्ध्वदेशसंयोगाऽसाधारणहेतुत्वमुत्क्षेपणत्वम् । अधोदेशसंयोगाऽसाधारणहेतुत्वमपक्षेपणत्वम् । शरीरस्य संनिकृष्टसंयोगाऽसाधारणहेतुत्वम्—आकुञ्चनत्वम् । शरीरस्य—अपकृष्टसंयोगाऽसाधारणहेतुत्वं प्रसारणत्वम् । उत्क्षेपणादिभिन्नत्वे सति कर्मत्वं गमनत्वम् ।

प्रश्नः—सामान्यस्य किं लक्षणम् ? कुत्र च सामान्यं वर्त्तते ? ।

उत्तरम्—नित्यत्वे सत्यनेकसमवेतत्वं सामान्यस्य लक्षणम् । संयोगादिवारणाय सत्यन्तम् । कालादिवारणाय विशेष्यदलम् । कालपरिमाणादावतिव्याप्तिवारणाय—अनेकेति । सामान्यञ्च-द्रव्यगुणकर्मवृत्ति ।

तच्च सामान्यं द्विविधं—पराऽपरभेदात् । परं सत्ता, अपरं द्रव्यत्वादि ।

नित्यद्रव्यवृत्तयो व्यावर्तकाः—विशेषाः ।

* न्यायबोधिनी *

ऽनुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ, जलपरमाणुगतरूपादौ चाऽतिव्याप्तिः, जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात्, समवेतत्वाच्च, अतः-'अनेकेति' ।

[ नित्यद्रव्यवृत्तय इति । नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः, अत एव व्यावर्तकाः—इतरभेदाऽनुमितिहेतवः । नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः । नित्यद्रव्यनि विशेष्यतानिरूपितैकमात्रवृत्ति, भेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः । पार्थिवपरमाणौ जलादिभेदानुमापकगन्धेऽतिव्याप्तिवारणाय 'एकमात्रवृत्तित्वं' भेदविशेषणम् । घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय 'निरूपितान्तं' प्रकारताविशेषणम् । एतेन''—'व्यावर्तका' इत्यस्य—नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया,—लक्षणपरत्वेन साफल्येऽपि—नित्यद्रव्यवृत्तय' इति विफलमेव, स्वरूपाख्यानस्यापि कृतत्वादिति—'' प्रत्युक्तम् ]।

* पदकृत्यम् *

अनेकेति । अनेकानुगतत्वं च समवायेन बोध्यम् । तेन नाऽत्यन्ताभावेऽतिव्याप्तिः ।

नित्यद्रव्यवृत्तय इति । घटत्वादिवारणाय नित्यद्रव्यवृत्तय इति । आत्मत्वमनस्त्ववारणाय 'आत्मत्वमनस्त्वभिन्ना' इत्यपि बोध्यम् ।

---

* परीक्षा *

प्रश्नः—विशेषस्य किं लक्षणम् ? ।

उत्तरम्—नित्यद्रव्यवृत्तित्वे सति, आत्मत्व-मनस्त्वभिन्नत्वे च सति, व्यावर्तकत्वं विशेषत्वम् । घटत्वादिवारणाय सत्यन्तम् । नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं च परिष्कृतं विशेषलक्षणमिति परे ।

नित्यसम्बन्धः-समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवाऽवतिष्ठते तौ—अयुतसिद्धौ। यथा अवयवाऽवयविनौ, गुण-गुणिनौ, क्रिया-क्रियावन्तौ, जाति-व्यक्ती, विशेष-नित्यद्रव्ये चेति।

अनादिः सान्तः—प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य।

*** न्यायबोधिनी ***

समवायं निरूपयति—नित्येति। सम्बन्धत्वं—विशिष्टप्रतीतिनियामकत्वम्। तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो 'नित्य' इति विशेषणम्।

[ ययोर्द्वयोर्मध्य इति। यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं, तदुभयाऽन्यतरत्वमयुतसिद्धत्वमित्यर्थः ]।

*** पदकृत्यम् ***

नित्येति। आकाशादिवारणाय सम्बन्ध इति। संयोगवारणाय नित्येति। स्वरूपसम्बन्धवारणाय तद्भिन्न इत्यपि बोध्यम्।

प्रागभावं लक्षयति—अनादिरिति। घटादिवारणाय प्रथमदलम्। परमाणुवारणाय द्वितीयदलम्। पुनः प्रागभावः कस्मिन्कालेऽस्तीत्यत आह-उत्पत्तेरिति। कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणे[१] वर्तते इत्यर्थः।

---

*** परीक्षा ***

प्रश्नः—समवायस्य किं लक्षणम्?। कुत्र चाऽसौ वर्त्तते?। कथं च समवायसिद्धिः?।

उत्तरम्-नित्यत्वे सति, सम्बन्धत्वं समवायत्वम्। संयोगवारणाय सत्यन्तम्। आकाशादिवारणाय विशेष्यदलम्। स च समवायः-अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। यावसम्बद्धौ न कदापि तिष्ठतस्तावयुतसिद्धाविति यावत्। यथा-अवयवाऽवयविनौ गुणगुणिनौ, क्रियाक्रियावन्तौ जातिव्यक्ती, विशेष-नित्यद्रव्ये च।

समवायसिद्धिस्तु-'नीलो घट' इति विशिष्टबुद्धिः-विशेषणविशेष्यसम्बन्धविषया,-विशिष्टबुद्धित्वात्, 'दण्डी पुरुष' इति विशिष्टबुद्धिवत्' इत्यनुमानेनैव।

प्रश्नः—समवायस्य किं लक्षणं? क्व चासौ वर्त्तते?।

उत्तरम्—अनादित्वे सति, सान्तत्वे सत्यभावत्वं-प्रागभावत्वम्। स च घटादिकार्योत्पत्तेः प्राक् स्वप्रतियोगिनो घटस्य समवायिकारणे कपालादौ वर्त्तते। 'इह कपाले घटो भविष्यती'ति प्रतीतेः।

---

१ प्रध्वंसाऽभावप्रतियोगिघटादिसमवायिकारणे कपालादौ वर्त्तते इत्यर्थः।

सादिरनन्तः-प्रध्वंसः। उत्पत्त्यनन्तरं कार्यस्य।

त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः। यथा 'भूतले घटो नास्ती'ति।

### * न्यायबोधिनी *

अत्यन्ताभावं निरूपयति-त्रैकालिकेति। प्रागभावाऽप्रतियोगित्वे सति, ध्वंसाऽप्रतियोगित्वे सति, अन्योन्याऽभावभिन्नत्वे सति-अभावत्वम्-अत्यन्ताभावस्य लक्षणम्। ध्वंस-प्रागभावा-ऽन्योन्याभावा-ऽऽकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम्। वस्तुतस्तु-संसर्गाभावत्वं-तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वम्। ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति [1]तेनैव [2]तद्वारणे 'त्रैकालिके'ति [3]स्वरूपाख्यानमेवेति बोध्यम्।

### * पदकृत्यम् *

ध्वंसं लक्षयति-सादिरिति। घटादिवारणाय-अनन्त इति। आत्मादिवारणाय-सादिरित। उत्पत्त्येति। कार्यस्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः। स च 'ध्वस्तः' इति प्रत्ययविषयः।

अत्यन्ताऽभावं लक्षयति-त्रैकालिकेति। त्रैकालिकत्वे सति, संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः। ध्वंसप्रागभाववारणाय-त्रैकालिकेति। भेदवारणाय संसर्गेत्यादि।

---

### * बालमनोरमा *

१ 'संसर्गाभावत्व'मित्यनेनैव।

२ तद्वारणे=ध्वंसप्रागभाववारणसम्भवे। ३ स्पष्टार्थमेव।

---

### * परीक्षा *

प्रश्न—प्रध्वंसाभावस्य किं लक्षणं?। कुत्र चासौ वर्त्तते?।

उत्तरम्—सादित्वे सति, अन्तशून्यत्वे सत्यभावत्वं प्रध्वंसाऽभावत्वम्। स च घटादिकार्योत्पत्त्यनन्तरं स्वप्रतियोगिघटादिसमवायिकारणकपालादिवृत्तिः। स च अभावः 'घटो ध्वस्त' इति प्रतीतिसाक्षिकः।

प्रश्नः—अत्यन्ताऽभावस्य किं लक्षणम्?। क्व च तत्प्रतीतिः?।

उत्तरम्—त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः। एवञ्च—तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वम्—अत्यन्ताभावस्य लक्षणं निष्पन्नम्। तत्प्रतीतिश्च यथा— 'भूतले घटो नास्ती'ति।

तादात्म्यसम्बन्धाऽवच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा 'घटः पटो ने'ति ।

सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम् ।

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥ १ ॥

इति अन्नम्भट्टविरचितस्तर्कसंग्रहः ॥

---

*** न्यायबोधिनी ***

अन्योन्याऽभावं निरूपयति—तादात्म्येति । अभावत्रयवारणाय विशेषणम्, 'घटाभाववान्' इति प्रतीतिविषयघटादिवारणाय विशेष्यम् ।

ननु सादृश्यादीनामतिरिक्तपदार्थानामनिरूपणेन न्यूनतेत्यत आह—सर्वेषामिति । 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति न्यायस्याऽऽदिमसूत्रे उक्तानां प्रमाण प्रमेयादीनामित्यर्थः ।

तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मरूपसादृश्यस्यापि घटपटादिरूपत्वेन नाऽतिरिक्तत्वम् । एवमन्येषामप्यूह्यम् । विस्तरस्त्वन्यत्राऽनुसन्धेयः ।

काणादेति । कणादस्येदं काणादम् । 'काणादन्यायमत'मिति द्वन्द्वगर्भ-

*** पदकृत्यम् ***

अन्योन्याभावं लक्षयति - तादात्म्येति । प्रागभावप्रध्वंसाभाववारणाय तादात्म्येति । अत्यन्ताभाववारणाय तादात्म्यत्वेन सम्बन्धो विशेषणीयः ।

पदार्थज्ञानस्य परमप्रयोजनं मोक्ष इत्यामनन्ति । स च आत्यन्तिकैकविंशतिदुःखध्वंसः । आत्यन्तिकत्वं च—स्वसमानाधिकरणदुःखप्रागभावाऽसमानकालीनत्वम् । दुःखध्वंसस्येदानीमपि सत्त्वेनाऽस्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । मुक्तात्मनः दुःखध्वंसस्यान्यदीयदुःखप्रागभावसमानकालीनत्वाद्वामदेवादीनां मुक्तात्मनामप्यमुक्तत्वप्रसङ्गात्स्वसमानाधिकरणेति प्रागभावविशेषणम् । दुःखानि चैकविंशतिः-शरीरं[१], षड्बाह्यरिन्द्रियाणि[६], षड्विषयाः[६], षड्बुद्धयः[६], सुखं[१], दुःखञ्चेति[१] । दुःखानुषङ्गित्वाच्छरीरादौ गौणदुःखत्वम् । तथा च 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुतेरात्मज्ञानसाधननिदिध्यासनमननसाधनत्वं पदार्थज्ञाने सङ्घटीत । एवं च तत्त्वज्ञाने सति, शरीरपुत्रादावात्मत्वस्वीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः । तेन दोषाऽभावः, तेन प्रवृत्त्यनुत्पत्तिः, ततस्तत्कालीनशरीरेण [१]कायव्यूहेन वा भोगतत्त्व-

---

*** परीक्षा ***

प्रश्नः—अन्योन्याऽभावस्य किं लक्षणम् ? । किञ्चोदाहरणम् ? ।

उत्तरम्· तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वम् अन्योन्याऽभावत्वम् । उदाहरणं यथा—'घटः पटो ने'त्यादि । इति शिवम् ।

## * न्यायबोधिनी *

कर्मधारयः । 'कणादप्रोक्त-गौतमप्रोक्तमतयो'रिति यावत् । काणादन्यायाऽभिन्नमत-द्वयविषयकबालसमवेताऽभिन्नव्युत्पत्तिसिद्धिप्रयोजकाऽन्नम्भट्टविद्वन्निष्ठभूतकालीन -कृतिविषयाऽभिन्नस्तर्कसंग्रहाख्यग्रन्थ इत्यन्वयबोधः ।

कृष्णावलम्बिनो गाः पूषा गोवर्धनस्तमभ्यर्चन् (?) ।
विपुलाभीरसभाजनजितविबुधेन्द्रस्तवाभिरचनाभिः ॥

इति श्रीगोवर्द्धनकृता न्यायबोधिनी विवृतिः ।

---

## * पदकृत्यम् *

ज्ञानाभ्यां प्रारब्धकर्मणां नाशः । ततो जन्माऽभावः ।

'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः' ।

—इत्यादिवचनात्, 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतेश्च-सगुणोपासनाकाशीमरणादेरपि तत्वज्ञानद्वारा मुक्तिहेतुत्वम । अत एव परमेश्वरः काश्यां तारकमुपदिशतीति सारम् ।

चक्रे चन्द्रजसिंहो हि पदकृत्यमिदं शुभम् ।
परोपकारकरणं माधवो वांछतामिदम् ॥ १ ॥

इति श्रीमत्तत्रभवद्गुरुदत्तसिंहशिष्यश्रीचन्द्रजसिंहविरचितं पदकृत्यम् ॥

---

## * बालमनोरमा *

(१०४ पृष्ठे) १ कायव्यूहः=योगिकल्पितशरीरसमूहः ।

इति पण्डितराजश्रीस्नेहिरामशास्त्रिणां पौत्रेण, न्यायाचार्यश्रीशिवनारायण-शास्त्रिणां पुत्रेण, व्याकरणाचार्य न्यायाचार्य-दर्शनाचार्य-श्रीगुरुप्रसादशास्त्रिणा विरचिता तर्कसंग्रहबालमनोरमा ॥ शुभम् ॥

---

## * परीक्षा *

गुरुप्रसादसंलब्धा परीक्षा-तरणीमिमाम् । आरुह्य सन्तरन्त्वद्य परीक्षाऽगहनां नदीम् ॥१॥

इति श्रीगुरुप्रसादशास्त्रिसङ्कलिता तर्कसंग्रहस्य परीक्षाटीका ।

( पौष कृ० ७ रवौ १९९३ वैक्रमे )

समीक्षकः, संस्कर्त्ता च—आचार्य-श्रीसीतारामशास्त्री,
'व्याकरणाचार्यः, 'राजशास्त्री', 'साहित्यरत्नम्' ।
प्रिन्सिपल—सेठश्रीराधाकृष्णपोद्दार संस्कृत-विद्यालय,
पो०—रामगढ़, ( जयपुर )

॥ श्रीः ॥

अथ

# सरलाख्य-भाषाटीका-विराजितः ।

# तर्कसङ्ग्रहः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।

बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥ १ ॥

द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाय-ऽभावाः सप्त पदार्थाः । तत्र द्रव्याणि—

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।

रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्म-संस्काराश्चतुर्विंशति गुणाः ।

उत्क्षेपणा-ऽपक्षेपणा-ऽऽकुञ्चन-प्रसारण-गमनानि पञ्च कर्माणि ।

परमपरञ्चेति द्विविधं सामान्यम् ।

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।

समवायस्त्वेक एव ।

---

आचार्य-श्रीसीतारामशास्त्रिसंदृब्धा—

## ❀ सरला भाषाटीका ❀

मैं अन्नम्भट्ट हृदय में श्रीविश्वेश्वर को अच्छी तरह स्थापित (चिन्तन) करके, और गुरुजी महाराज को सादर प्रणाम करके, तर्कशास्त्र में बालकों के सुखपूर्वक प्रवेश होने के लिए, 'तर्कसङ्ग्रह' नामक इस ग्रन्थ को बनाता हूँ ॥ १ ॥

द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, अभाव—ये सात ७ पदार्थ हैं । उनमें—पृथिवी, जल, तेज, वायु, आकाश, काल, दिक्, आत्मा और मन ये नौ ९ द्रव्य हैं ।

रूप, रस, गन्ध, स्पर्श, संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, परत्व, अपरत्व, गुरुत्व, द्रवत्व आदि २४ गुण हैं ।

उत्क्षेपण ( ऊपर फेंकना ), अपक्षेपण (नीचे फेंकना) आकुञ्चन (समेटना), प्रसारण ( फैलाना ) और गमन ( जाना ) ये ५ कर्म हैं ।

पर और अपर—दो प्रकार का सामान्य है । अधिक देश में रहने वाला पर सामान्य है, जैसे द्रव्यत्व । अल्प देश में रहनेवाला अपर सामान्य है-जैसे-घटत्व ।

विशेष—नित्य द्रव्य परमाणु—आदि में रहता है और वह अनन्त है ।

समवाय—एक ही है ।

अभावश्चतुर्विधः । प्रागभावः,प्रध्वंसाभावोऽत्यन्ताऽभावोऽन्योन्याभावश्चेति ।

तत्र-गन्धवती पृथिवी । सा द्विविधा-नित्या, अनित्या च ।

नित्या-परमाणुरूपा । अनित्या-कार्यरूपा ।

पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् ।

इन्द्रियं गन्धग्राहक घ्राणं-नासाग्रवर्ति । विषयो-मृत्पाषाणादिः ।

शीतस्पर्शवत्य आपः । ता द्विविधाः-नित्याः, अनित्याश्च ।

नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः ।

पुनस्त्रिविधाः-शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं-रसग्राहकं रसनं-जिह्वाग्रवर्ति । विषयः-सरित्समुद्रादिः ।

उष्णस्पर्शवत्तेजः । तच्च द्विविधं नित्यमनित्यञ्च ।

नित्यं-परमाणुरूपम्, अनित्यं कार्यरूपम् ।

पुनस्त्रिविधं, शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः—कृष्णताराग्रवर्ति । विषयश्चतुर्विधो—भौम-दिव्योदर्याऽऽकरजभेदात् । भौमं-वह्न्यादिकम् । दिव्यम्-अबिन्धनं-विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ।

---

अभाव चार प्रकार का है-प्रागभाव,प्रध्वंसाभाव,अन्योन्याभाव,अत्यन्ताभाव ।

जिसमें गन्ध समवाय सम्बन्ध से रहता हो वह पृथिवी है । वह दो प्रकार की है—नित्य और अनित्य। परमाणु रूप पृथिवी नित्य है । और घट आदि कार्यरूप पृथिवी अनित्य है। अनित्य पृथिवी तीन प्रकार की है—शरीर, इन्द्रिय विषय। हम लोगों का शरीर पार्थिव शरीर है । गन्ध ग्राहक घ्राणेन्द्रिय-पार्थिव इन्द्रिय है, जो नाक के अग्रभाग पर रहत है। घट पट मिट्टी पत्थर फूल आदि सब पार्थिव विषय हैं।

शीतल स्पर्श जिसमें रहे, वह—जल है । जल दो प्रकार का है, नित्य और अनित्य । परमाणुरूप जल नित्य है । कार्यरूप (स्थूल) जल अनित्य है । कार्य-जल-शरीर, इन्द्रिय, विषय भेद से तीन तरह का है । वरुणलोकवासियों का शरीर जल का है। जिह्वा के अग्र भाग में रस आदि को बतानेवाली जो रसनेन्द्रिय है, वही जलीय इन्द्रिय है । नदी समुद्र कूप आदि जलीय विषय हैं ।

जिसमें उष्ण स्पर्श हो वह तेज है। नित्य अनित्य भेद से वह तेज दो प्रकार का है। परमाणुरूप तेज नित्य है। काय (अग्नि आदि) रूप तेज अनित्य है । अनित्य तेज भी तीन प्रकार का है-शरीर, इन्द्रिय और विषय। तैजस शरीर सूर्यलोक में प्रसिद्ध है ।

रूप को बतानेवाली चक्षु इन्द्रिय जो कि—आँख के कृष्णतारा के अग्रिम भाग में रहती है—वह तैजस इन्द्रिय है। तैजस विषय चार तरह का है—भौम, दिव्य, उदर्य और आकरज। अग्नि आदि भौम तेज हैं। जल से उत्पन्न होनेवाली बिजली दिव्य तेज है । खान से निकला हुआ सोना आदि आकरज तेज है ।

रूपरहितः स्पर्शवान् वायुः। स द्विविधः–नित्योऽनित्यश्च।

नित्यः परमाणुरूपः। अनित्यः-कार्यरूपः।

पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात्। शरीरं-वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक-सर्वशरीरवर्ति। विषयो–वृक्षादिकम्पनहेतुः।

शरीरान्तःसञ्चारी वायु-प्राणः। स चैकोऽप्युपाधिभेदात्प्राणाऽपानादिसञ्ज्ञां लभते।

शब्दगुणकमाकाशम्। तच्चैकं, विभु नित्यञ्च।

अतीतादिव्यवहारहेतुः कालः। स चैका विभुर्नित्यश्च।

प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका, नित्या, विभ्वी च।

ज्ञानाधिकरणमात्मा। स द्विविधः जीवात्मा, परमात्मा चेति।

तत्रेश्वरः–सर्वज्ञः परमात्मा एक एव।

जीवस्तु-प्रतिशरीरं भिन्नो, विभुर्नित्यश्च।

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं, परमाणुरूपं, नित्यञ्च।

---

जो रूप से रहित हो परन्तु स्पर्शवाला हो वह वायु है। वह वायु नित्य और अनित्य दो प्रकार का है। उसमें परमाणुस्वरूप वायु नित्य है। कार्यरूप वायु अनित्य है।

अनित्य वायु तीन तरह का है–शरीर इन्द्रिय विषय भेद से। वायवीय शरीर वायुलोक में है। वायवीय इन्द्रिय त्वगिन्द्रिय है, जो सम्पूर्ण शरीर में विद्यमान है, और जिससे ठंढे गर्म आदि स्पर्श का प्रत्यक्ष होता है। वृक्ष आदि को कँपाने वाला वायु विषय है। शरीर के भीतर संचार करने वाला वायु प्राण है। वह एक है। परन्तु हृदय नाभि आदि स्थानों के भेद से प्राण, अपान, समान, उदान, और व्यान इन भेदों से पाँच प्रकार का है।

समवाय सम्बन्ध से शब्दस्वरूप गुण जिसमें रहे वह आकाश है। वह आकाश एक है, सर्व व्यापक है, और नित्य है।

अतीत ( भूत ), आगामी ( भविष्यत् ) आदि व्यवहार का हेतु जो द्रव्य है, वह काल है। वह काल सर्वव्यापी है और नित्य है।

पूर्व, पश्चिम, दक्षिण आदि व्यवहार का हेतु जो द्रव्य है वह-दिशा है। वह एक है, सर्वव्यापक है, और नित्य है।

समवाय सम्बन्ध से जिस द्रव्य में ज्ञान रहे वह द्रव्य आत्मा है। वह दो तरह का है–जीवात्मा और परमात्मा। परमात्मा-ईश्वर है, सर्वज्ञ है, और एक है। जीवात्मा-प्रत्येक शरीर में भिन्न भिन्न है, व्यापक है और नित्य है।

जिस इन्द्रिय से सुख और दुःख का साक्षात्कार होता है उसका नाम मन है। वह प्रत्येक जीवात्मा के साथ भिन्न भिन्न है, अत एव अनन्त है। वह मन परम अणु रूप है और नित्य है।

